TRIVANDRUM SANSKRIT SERIES.

No. XCIII.

Śrî Setu Lakṣmî Prasâdamâlâ.

No. V.

THE

# VEDÂNTAPARIBHÂṢÂ

OF

DHARMARÂJÂDHVARÎNDRA

WITH

**the commentary Prakâsikâ**

OF

PEDDÂ DÎKṢITA

EDITED BY

K. SÂMBAŚIVA ŚÂSTRÎ,

*Curator of the Department for the Publication of Sanskrit Manuscripts, Trivandrum.*



PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HER HIGHNESS THE MAHARANI REGENT OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS.
1928.





अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९३.

श्रीसेतुलक्ष्मीप्रसादमाला ।

ग्रन्थाङ्कः ५.

श्रीधर्मराजाध्वरीन्द्रविरचिता

# वेदान्तपरिभाषा

श्रीपेद्दादीक्षितविरचितप्रकाशिकाख्यव्याख्यासमेता

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधिता ।

सा च

अनन्तशयने

महामहिमश्रीसेतुलक्ष्मीमहाराज्ञीशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशिता ।

कोलम्बाब्दाः ११०३, क्रैस्ताब्दाः १९२८.

# PREFACE.

"Prakāśikā" is a commentary none too elaborate on the Vedāntaparibhāṣā of Śrī Dharmarāja Adhvarīndra, and well deserves its name by the light it throws on the whole subject. Both the work commented on and its author are well-known to scholars. The work is an authority of repute on monistic Vedānta and it is divided into eight chapters beginning with that on Pratyakṣa and ending with that on Prayojana. Naturally for such a work commentaries can never be too many and Prakāśikā is indispensable in serving a useful purpose.

This commentary is one of rare merit; it sets before itself Mallinātha's motto:—"Nothing shall be herein stated that may not have its basis on the text; no uncalled for statement shall find a place here"; its explanations bring out in clear outline the meaning of the text, are convincing in the repudiation of opposite schools and the establishment of the author's conclusions. Thus has this commentary commended itself to us for publication in this series though it is none too ancient yet none too modern either.

Of the author of Prakāśikā, one Peddā Dīkṣita we have no information whatever as to when he lived or where he lived. But the following opening verses

"यत्प्रसादप्लवेनैव शास्त्राब्धिमतरं सुखम् ।
तं धर्मराजाध्वरिणं वन्दे सर्वार्थसिद्धये ॥

येनाकारि कुवादिवारणसृणिः सत्तर्कचूडामणि-
र्यस्याज्ञा धरणीशसङ्घमकुटीमन्दारमालायिता ।
यच्छिष्याः प्रतिवादिमल्लधिषणापाण्डित्यपाटच्चराः
सोऽयं सज्जनकल्पको विजयते श्रीधर्मराजाध्वरी ॥"

would lead us to conclude that Peddā Dīkṣita was the disciple of Dharmarāja Adhvarīndra—in which case we might be bold enough to take the reference implied in "यत्प्रसादप्लवेनैव &c"., to mean a personal one. The fact that Peddā Dīkṣita himself indulges to a considerable degree, in the enterprises he attributes to the disciples of Dharmarāja Adhvarīndra in the line "यच्छिष्याः प्रतिवादिमल्लधिषणापाण्डित्यपाटच्चराः" would in my opinion lend colour to the above theory.

Observe now, the following verses which are found in a manuscript by the name of "Chandovicitivṛtti" belonging to the collections of this office.

"

येन कण्डरमाणिक्यग्रामरत्ननिवासिना ।
रङ्गनाथाध्वरीन्द्रेण मकरन्दाभिधा कृता ॥
व्याख्या हि पद्मञ्जर्याः कौमुद्याः पूर्णिमाभिधा ।
शिरसा तमहं वन्दे मम मातामहं गुरुम् ॥

. . . . . . . . . . . . . . . . . . .

. . . . . . . . . . . . . . . . . . . .

तञ्जापुराभिधग्रामे रम्ये वासं प्रकुर्वता ।
सत्कौशिककुलश्रीमत्प्रयागघुटिकेन च ॥
प्रधानसूत्रप्रमुखैः षड्भिः सूत्रैः सह स्फुटम् ॥
अधीतिना सामवेदे साङ्गे तद्भाष्यवेदिना ॥
प्रतिपादयता फुल्लं साम्नां पर्वणि पर्वणि ।
श्रौतस्मार्तप्रवीणेन नारायणसुतेन हि ॥
पेत्ताशास्त्र्यभिधानेन हृषीकेशेन शर्मणा ।
वृत्तिर्निदानगच्छन्दोविचित्याः क्रियतेतराम् ॥"

Now could not this Pettā Śāstrī be just the same Peddā Dīkṣita, the author of our present work? If so we know the following details about him. He is the grandson and disciple of Ranganātha Adhvarīndra native of Kaṇḍara Māṇikyagrāma; son of Nārāyaṇa Śarma of the Kauśika Gotra; with another name Hṛṣīkeśa Śarma; and resident in Tanjore.

The edition of the work is based on three palm leaf manuscripts marked क, ख and ग. क and ग found in one codex were obtained from Brahmaśri Anantanarayana Sastrial of Vadiveeswaram in South Travancore. The manuscript marked ग is incomplete and ख belongs to the Idappalli Chief.

*Trivandrum,*
3-10-103.

K. SAMBASIVA SASTRI.

# निवेदना।

श्रीधर्मराजाध्वरीन्द्रप्रणीतवेदान्तपरिभाषाया यावदर्थप्रकाशनसमर्था काचिदनतिविस्तरा व्याख्येयमाख्यया **प्रकाशिका**। वेदान्तपरिभाषा तत्कर्ता च सर्वतः पण्डितलोकस्य सुविदितौ। प्रत्यक्षादिप्रयोजनान्तैरष्टाभिः परिच्छेदैः सुश्लिष्टा परिभाषासावद्वैतवेदान्तव्युत्पत्तिमभिलषतामविकलं किमप्याराध्यं प्रमाणम्। अस्य हेतोरस्या नैकव्याख्याविर्भावावश्यम्भावे जाग्रति प्रस्तुता **प्रकाशिका** लब्धात्मा।

"नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते।"

इति दिशा मूलार्थनिष्कर्षनिकषैरुपपत्तिमहितैरुपन्यासैः परमतनिरासपुरःसरं स्वमतस्थापने बद्धकङ्कणा काचिदपूर्वेयं व्याख्या। अतोऽनतिप्राचीनाप्यपरमनवीना सकुतुकमितः प्रकाशनायोपात्ता।

कर्ता चास्याः श्रीपेद्दादीक्षितः कदा वा कस्मिन् वा देशे लब्धजन्मेत्यादिकं तु विविच्यावगन्तुं न किञ्चिदौपयिकमुपलभ्यते। उपक्रमे पुनः—

"यत्प्रसादप्लवेनैव शास्त्राब्धिमतरं सुखम्।
तं **धर्मराजाध्वरिणं** वन्दे सर्वार्थसिद्धये॥

येनाकारि कुवादिवारणसृणिः सत्तर्कचूडामणि-
र्यस्याज्ञा धरणीशसङ्घमकुटीमन्दारमालायिता।
यच्छिष्याः प्रतिवादिमल्लधिषणापाण्डित्यपाटच्चराः
सोऽयं सज्जनकल्पको विजयते श्रीधर्मराजाध्वरी॥"

इति भागाभ्यां पेद्दादीक्षितोऽयं वेदान्तपरिभाषाकर्तुः श्रीधर्मराजाध्वरीन्द्रस्यान्तेवासी सम्भाव्यः—यदि 'यत्प्रसादप्लवेने'त्यत्रत्यो यच्छब्दः साक्षाद् **धर्मराजाध्वरीन्द्रमु**द्दिशति, यदि च — 'यच्छिष्याः प्रतिवादिमल्लधिषणापाण्डित्यपाटच्चराः' इत्यत्र प्रस्तूयमानं यच्छिष्याणां प्रतिवादिमल्लधिषणापाण्डित्यपाटच्चरत्वम् अत्रैव ग्रन्थे तत्र तत्र प्रतिपाद्यमानया दिशा स्वस्मिन्नपि लगति। अन्यच्च — अस्मदधिकरणे सङ्गृहीतस्य **छन्दोविचितिवृत्तिग्रन्थ**स्यारम्भे

"...............................................

येन कण्डरमाणिक्यग्रामरत्ननिवासिना ।
रङ्गनाथाध्वरीन्द्रेण मकरन्दाभिधा कृता ॥

व्याख्या हि पदमञ्जर्याः कौमुद्याः पूर्णिमाभिधा ।
शिरसा तमहं वन्दे मम मातामहं गुरुम् ॥

...............................................

...............................................

तञ्जापुराभिधग्रामे रम्ये वासं प्रकुर्वता ।
सत्कौशिककुलश्रीमत्प्रयागघुटिकेन च ॥

प्रधानसूत्रप्रमुखैः षड्भिः सूत्रैः सह स्फुटम् ।
अधीतिना सामवेदे साङ्गे तद्भाष्यवेदिना ॥

प्रतिपादयता फुल्लं साम्नां पर्वणि पर्वणि ।
श्रौतस्मार्तप्रवीणेन नारायणसुतेन हि ॥

पेत्ताशास्त्र्यभिधानेन हृषीकेशेन शर्मणा ।
वृत्तिर्निदानगच्छन्दोविचित्याः क्रियतेतराम् ॥"

इति दृश्यमानप्रकारेण तत्कर्तुः पेत्ताशास्त्रिणो यदि प्रस्तुतो वेदान्तपरिभाषाव्याख्याता पेद्दादीक्षितो न भिद्यते, तर्हीयदपि शक्यमूरीकर्तुं यद्— 'असौ वेदान्तपरिभाषाव्याख्याता कण्डरमाणिक्यग्रामवासिनो रङ्गनाथाध्वरीन्द्रस्य दौहित्रः शिष्यश्च, नारायणशर्मणः पुत्रः, कौशिकवंशजः, हृषीकेशापरनामधेयः, तञ्जापुराभिधानग्रामवासी' इति ।

एतत्संशोधनावलम्बस्त्रय आदर्शाः। तेषु क-ग-संज्ञितौ वञ्चिराज्यान्तर्गतवटिवीश्वरग्रामाभिजनब्रह्मश्रीअनन्तनारायणशास्त्रिस्वामिकौ एकसाञ्चिकान्तर्गतौ । तयोर्ग-संज्ञितो न समग्रः । ख-संज्ञितः इडप्पळ्ळिराजसम्बन्धी समग्रः ।

अनन्तशयनम्, ३-१०-११०३. } के. साम्बशिवशास्त्री.

श्रीपद्मनाभसेवि-
न्यखिलश्रीवर्धनी महाराज्ञी ।
श्रीसेतुलक्ष्म्यभिख्या
प्रत्यक्षा जयति वञ्चिभूलक्ष्मीः ॥

ग्रन्थावलिरियमिन्धे
प्रसाधिता तत्प्रसादगुणगुम्फा ।
श्रीसहितसेतुलक्ष्मी-
प्रसादमाला सुवर्णमणिचित्रा ॥

# विषयानुक्रमणी ।

## प्रत्यक्षपरिच्छेदः ।

## अनुमानपरिच्छेदः ।

## उपमानपरिच्छेदः ।



## आगमपरिच्छेदः ।

विषयः. पृष्ठम्.

## अर्थापत्तिपरिच्छेदः ।



## अनुपलब्धिपरिच्छेदः ।



## विषयपरिच्छेदः ।

विषयः पृष्ठम्.



## प्रयोजनपरिच्छेदः ।

| विषयः | पृष्ठम्. |
|---|---|

॥ श्रीः ॥

श्रीधर्मराजाध्वरीन्द्रविरचिता

# वेदान्तपरिभाषा

## श्रीपेद्दादीक्षितविरचितप्रकाशिकाख्यव्याख्यासमेता ।

---

**यदविद्याविलासेन भूतभौतिकसृष्टयः ।**
**तं नौमि परमात्मानं सच्चिदानन्दविग्रहम् ॥ १ ॥**

---

ज्ञानं विशुद्धं परमार्थभूतं स्वयम्प्रकाशं जगदेकहेतुम् ।
आनन्दरूपं परमं परेशं वेदान्तवेद्यं तदहं प्रपद्ये ॥

यत्प्रसादप्लवेनैव शास्त्राब्धिमतरं सुखम् ।
तं धर्मराजाध्वरिणं वन्दे सर्वार्थसिद्धये ॥

येनाकारि कुवादिवारणसृणिः सत्तर्कचूडामणि-
र्यस्याज्ञा धरणीशसङ्घमकुटीमन्दारमालायिता ।
यच्छिष्याः प्रतिवादिमल्लधिषणापाण्डित्यपाटच्चराः
सोऽयं सज्जनकल्पको विजयते श्रीधर्मराजाध्वरी ॥

पेद्दादीक्षितवर्येण परिभाषाप्रकाशिका ।
क्रियते विदुषां प्रीत्यै बालानां मतिदायिनी ॥

अत्र प्रेक्षावत्प्रवृत्त्यर्थं विषयप्रयोजने निर्दिशन् निर्विघ्नपरिसमाप्तये इष्ट-देवतां नमस्करोति—**यदविद्येति** । यस्याविद्या यदविद्या । अत्र षष्ठ्यर्थस्तु विवरणाचार्यमते आश्रयाश्रयिभावः । आचार्यवाचस्पतिमते विषयविषयिभावः । अविद्या नाम भावरूपाज्ञानम् । तदुत्तरत्र वक्ष्यते । विलासो वृत्तिविशेषः मायो-पहितचैतन्यस्य परमेश्वरस्येक्षणसङ्कल्पप्रयत्नरूपः । तेन सहकारिणा । भूतानि पञ्च तन्मात्राणि, भौतिकानि स्थूलानि आकाशादीनि । तेषां सृष्टयो जन्मादीनि ।

G. P. T. 1033. 500. 30-3-102. B

**यदन्तेवासिपञ्चास्यैर्निरस्ता भेदिवारणाः ।**
**तं नौमि नरसिंहाख्यं यतीन्द्रं परमं गुरुम् ॥ २ ॥**
**श्रीमद्वेङ्कटनाथाख्यान् विलङ्कुडिनिवासिनः ।**
**जगद्गुरूनहं वन्दे सर्वतन्त्रप्रवर्तकान् ॥ ३ ॥**

भवन्तीति शेषः । सृष्टिग्रहणं स्थितिध्वंसोपलक्षणार्थम् । परमेश्वरस्य भूतमात्रकर्तृत्वं, हिरण्यगर्भस्य भौतिककर्तृत्वमिति केषाञ्चिन्मतम् । तन्निराकरणार्थं भौतिकग्रहणम् । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति श्रुत्या भौतिकसृष्टेरपीश्वरकर्तृकत्वावगमात् । एवं पूर्वार्धेन जगज्जन्मादिकारणत्वं तटस्थलक्षणमित्युक्तं भवति । स्वरूपलक्षणमाह—**सच्चिदानन्दविग्रह-मिति** । सच्चिदानन्दात्मकमित्यर्थः । ब्रह्मणः सदादिरूपत्वे 'सत्यं ज्ञानमनन्तं ब्रह्म' 'आनन्दो ब्रह्मेति व्यजानात्' इत्यादिश्रुतिर्मानम् । अत्रानन्द इत्यनेन प्रयोजनमुक्तम् । ननु सिद्धान्ते जीवपरयोरेकत्वान्नमस्कारानुपपत्तिरिति शङ्कां निराकर्तुं परमात्मानमित्युक्तम् । व्यावहारिकभेदेन भिन्नस्येश्वरस्य जीवापेक्षया परत्वान्नमस्कार्यत्वो[1]पपत्तिरिति भावः । यद्वा शास्त्रस्य विषयं निर्दिशति—**परमात्मानमिति** । जीवाभिन्नं परमित्यर्थः ॥ १ ॥

इदानीं

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥"

इत्यादिशास्त्राद् गुरुभक्तेर्विद्याङ्गत्वावगमेन गुरुपूजायां कर्तव्यायां तत्रापि 'आचार्यप्राचार्यसन्निपाते—' इत्याद्यापस्तम्बवचनेन प्राचार्यस्याचार्याधिक्यप्रतीतेः[2] परमगुरून् नमस्करोति—**यदन्तेवासी**ति । यस्यान्तेवासिनः शिष्याः । त एव पञ्चास्याः सिंहाः तैः । सिंहसादृश्यमाह—**निरस्ता** इति । भेदिनः भेदवादिनः त एव वारणाः गजाः । नरसिंहाख्यं नरसिंहाश्रमं यतीन्द्रं यतिश्रेष्ठम् ॥ २ ॥

साक्षाद्गुरून् नमस्करोति—**श्रीमदिति** । **विलङ्कुडीति** । चोलभूम्यां कावेर्या दक्षिणभागे कुम्भको[3]णस्य प्राग्भागे विद्वज्जनभूषितो विलङ्कुडिरिति ग्रामः प्रसिद्धः । तन्निवासिन इत्यर्थः । न केवलं ममैव ते गुरवः, किन्तु निखिलविद्वज्जनस्येत्याह—**जगद्गुरूनिति** । न केवलं वेदान्तव्याख्यातृत्वं, किन्तु समस्तशास्त्रव्याख्यातृ[4]तेत्याह—**सर्वतन्त्रेति** ॥ ३ ॥

---

१. 'तो', २. 'प्रतिपत्तेः' क. पाठः. ३. 'घो' ख. पाठः. ४. 'ख्याते' क. पाठः.

**येन चिन्तामणौ टीका दशटीकाविभञ्जनी ।**
**तर्कचूडामणिर्नाम कृता विद्वन्मनोरमा ॥ ४ ॥**

***टीका शशधरस्यापि बालव्युत्पत्तिदायिनी ।**
**पदयोजनया पञ्चपादिका व्याकृता तथा ॥ ५ ॥**

**तेन बोधाय मन्दानां वेदान्तार्थावलम्बिनी ।**
**धर्मराजाध्वरीन्द्रेण परिभाषा वितन्यते ॥ ६ ॥**

---

इदानीं स्वग्रन्थस्योपादेयतां दर्शयन् स्वकीर्त्यनुवृत्त्यर्थं स्वकृतान् ग्रन्थाननुक्रामति — **येने**ति । यद्यपि चिन्तामणिव्याख्यानस्य रुचिदत्तकृतस्य स्वेन टीका कृता नतु मणेः, तथापि क्वचित् साक्षात् परम्परया वा मणेरपि व्याख्यातत्वाच्चिन्तामणावित्युक्तम् । **दशटीके**ति । प्रभालोकप्रभृतीनां दशानां टीकानां तत्र तत्र भञ्जनाद् दशटीकाविभञ्जनीत्युक्तम् ॥ ४ ॥

**शशधरस्ये**ति । शशधरनाम्ना कृतस्य सिद्धान्तदीपाख्यग्रन्थस्येत्यर्थः । **पञ्चपादिके**ति । यद्यपि पञ्चपादिकैकदेश[1]चतुस्सूत्री व्याकृता, तथापि ग्रामैकदेश आयाते ग्राम आयात इ[2]तिवत् पञ्चपादिकेत्युक्तम् ॥ ५ ॥

**तेन** । धर्मराजाध्वरीन्द्रेण वितन्यत इति सम्बन्धः । नन्वत्र मङ्गलं न कर्तव्यं, प्रयोजनाभावाज्जलताडनवत् । नच समाप्तिफलकतया हेत्वसिद्धिरिति वाच्यम् । अन्वयेन व्यतिरेकेण च व्यभिचारेण समाप्तेस्तत्फलत्वायोगात् । किञ्च एवमपि मङ्गलं न कर्तव्यं प्रमाणाभावात् । नच प्रत्यक्षं मानं, दण्डादिवदन्वयव्यतिरेकाभावादिति चेत् । मैवं मंस्थाः । समाप्तेस्तत्फलत्वाभावेऽपि विघ्नध्वंसस्य तत्फलत्वात् । तदुक्तं टीकाकृता — 'प्रसिद्धं हि मङ्गलाचरणस्य विघ्नोपशमनं प्रयोजनमि'ति । नापि प्रमाणाभावः, मङ्गलं वेदबोधितकर्तव्यताकम् अभ्रान्तेन धर्मबुद्ध्यानुष्ठीयमानत्वाद् दर्शा[3]दिवदित्यनुमितवेदस्यैव मानत्वात् । एतेन धर्मभ्रान्त्यानुष्ठीयमानचैत्यवन्दनादौ शिष्टकृतनिष्ठीवनादौ च न व्यभिचार इति ॥ ६ ॥

---

१. 'शे', २. 'ति प', ३. 'र्शेव' क. पाठः.

---

* पद्यमिदं मुद्रितपुस्तके नास्ति ।

**इह खलु धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थः, 'नच पुनरावर्तते' इत्यादिना तस्य नित्यत्वावगमात् । इतरेषां त्रयाणां* प्रत्यक्षेण, 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्यादिश्रुत्या चानित्यत्वावगमात् ।**

तत्र प्रमाणादिचिन्तोपोद्धातत्वेन पुरुषार्थभेदं दर्शयति — **इहेति**। अथवा 'सच्चिदानन्दे'त्यादिनास्य शास्त्रस्यानन्दावाप्तिरूपमोक्षः प्रयोजनमित्युक्तम् । तदयुक्तं, स्वर्गादेरपि प्रयोजनत्वसम्भवादित्याशङ्क्य मोक्षस्य परमप्रयोजनत्वात् स्वर्गादेश्चातथात्वादित्याशयेन मोक्षस्य परमप्रयोजनत्वं साधयति — **इहेति** । जगतीत्यर्थः । खलुशब्दो वाक्यालङ्कारे ।

"धर्मार्थकाममोक्षाख्यः पुरुषार्थ उदाहृतः ।"

"धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ! ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥"

इति विष्णुपुराणमहाभारताद्युक्तपुरुषार्थेषु मध्ये मोक्ष एव परमपुरुषार्थ इत्यर्थः । तत्र प्रमाणमाह — **न(चे)**ति । यस्तु मुक्तः स पुनः संसारभाङ् न भवतीत्यर्थः । तस्य मोक्षस्य । ननु कामादयोऽपि नित्याः पुरुषार्थत्वात् सम्मतवदित्याशङ्क्याग्निशैत्यानुमानवद् बाधितविषयमनुमानमित्याह — **इतरेषामिति** । धर्मार्थकामानामित्यर्थः । अत्रार्थकामयोः प्रत्यक्षेण, धर्मस्य च श्रुत्या अनित्यत्वावगमादिति यथायोगं द्रष्टव्यम् । **तद्यथेति** । इह अस्मिँल्लोके । कर्मचित-कर्मनिर्मितः । लोक्यत इति लोकः घटादिरिति यावत् । क्षीयते नश्यति । दार्ष्टान्तिकमाह — **एवमिति** । यद्यपि अनया श्रुत्या धर्मजनितफलस्यानित्यत्वं बोध्यते, नतु धर्मस्य । तथापि फलस्यानित्यत्वेन धर्मस्यापि तथात्वाज्जनितफलकस्य धर्मस्यावस्थानायोगात् । तथाच श्रुतिमूलकानुमानं मानमित्यत्र तात्पर्यम् । ननु मा नाम भूदर्थकामयोरनित्यतया परमपुरुषार्थत्वं, तथापि धर्मस्य तथात्वं किं न स्यात् । 'अपाम सोमममृता अभूम' 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्यादिश्रुत्या तस्य नित्यत्वावगमादितिचेत् । मैवं भाषिष्ठाः । यत् कृतकं तदनित्यमिति व्याप्तिपरिगृहीतायाः 'तद्यथेहे'त्यादिश्रुतेरेव बलवत्त्वेनामृतत्वादिश्रुतेर्दुर्बलत्वात् । तस्याश्च प्रलयपर्यन्तावस्थानाभिप्रायकत्वात् । तदुक्तं विष्णुपुराणे —

* 'णां तु प्र' मुद्रितपुस्तकपाठः.

**स च ब्रह्मज्ञानादिति ब्रह्म तज्ज्ञानं तत्प्रमाणं च सप्रपञ्चं निरूप्यते ।**

**तत्र प्रमाकरणं प्रमाणम् । तत्र स्मृतिव्यावृत्तं प्रमात्वमनधिगताबाधितार्थविषयकज्ञानत्वम् । स्मृतिसाधारणं त्वबाधितार्थविषयकज्ञानत्वम् । नीरूपस्यापि कालस्य (षडि? इ)न्द्रियवेद्यत्वाभ्युपगमेन धारा-**

---

"आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते ।"

इति । तस्माद् ब्रह्मस्वरूपानन्दावाप्तिरेव प्रयोजनं 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतेरिति भावः । **स** चेति । मोक्ष इत्यर्थः । **सप्रपञ्चमिति** । ब्रह्म सगुणमुत निर्गुणं, निर्गुणत्वेऽपि किं नित्यम् उतानित्यमित्यादिसंशयनिरासाय ब्रह्मनिरूपणम् । ब्रह्मज्ञानमपि किं सविकल्पकमुत निर्विकल्पकं, निर्विकल्पकमपि किं कर्मसमुच्चितमुतासमुच्चितम्, असमुच्चितत्वेऽपि किं परोक्षमुतापरोक्षम्, अपरोक्षमपि किमिन्द्रियजन्यमुत वेदान्तजन्यमित्यादिसंशयनिराकरणार्थं ब्रह्मज्ञाननिरूपणम् । तथा ब्रह्मणि किं वेदान्ता एव प्रमाणमुतानुमानादिकमपि, वेदान्तानामेव प्रामाण्येऽपि किं कार्यविषयतया उत साक्षादित्यादिसंशयनिरासार्थं ब्रह्मप्रमाणनिरूपणमित्यर्थः ।

यद्यपि ब्रह्मप्रमाणनिरूपणस्य ब्रह्मनिरूपणाधीननिरूपणतया विशेषणीभूतब्रह्मनिरूपणस्य प्राथम्यमुचितम् । तथापि मानाधीना मेयसिद्धिरिति न्यायेन प्रमाणस्वरूपमात्रस्य ब्रह्मनिरूपणमन्तरेण निरूपयितुं शक्यतया च प्रथमं प्रमाणं निरूपयति — **तत्रे**ति । तेषु मध्य इत्यर्थः । सर्वोत्पत्तिमन्निमित्तकारण अदृष्टादावतिव्याप्तिवारणाय करणपदमुपात्तम् । प्रमालक्षणमाह — **तत्रे**ति । प्रमाणे निरूपणीय इत्यर्थः । स्मृतावतिव्याप्तिरित्यत उक्तम् — **अनधिगते**ति । अनिर्वचनीयरजतस्य तत्कालोत्पन्नस्य पूर्वमनधिगतत्वेन तद्गोचरभ्रमेऽतिव्याप्तिवारणार्थमुक्तम् — **अबाधिते**ति । तस्य नेदं रजतमिति ज्ञानेन बाधितत्वादिति भावः । ननु स्मृतेः प्रमात्वानङ्गीकारे तयाबाधितप्रवृत्तिर्न स्यात्, प्रामाण्याधीनत्वात् तत्प्रवृत्तेः । स्मृतिप्रामाण्याङ्गीकारवादिप्राभाकरमतेऽनधिगतपदवैयर्थ्याच्चेत्याशङ्क्य तथैव लक्षणमाह — **स्मृतिसाधारणं त्वि**ति । अबाधितार्थविषयकत्वमात्रस्य तदुपयोगित्वादिति भावः । इच्छायामतिव्याप्तिवारणार्थं ज्ञानत्वमित्युक्तम् । नन्वेकस्मिन्नेव घटे घटोऽयं घटोऽयमिति यत्र नैरन्तर्येण घटज्ञानमुत्पद्यते, तत्र प्रथमलक्षणस्याव्याप्तिः । तस्याबाधितविषयकत्वेऽपि ज्ञातार्थावगाहित्वादित्यत आह — **नीरूपस्ये**त्यादिना । तत्र धारा-

---

१. 'या सा', २. 'णस्य', ३. 'यस्व', ४. 'नाम्रि' क. पाठः.

**वाहिकबुद्धेरपि पूर्वपूर्वज्ञानाविषयतत्तत्क्षणविशेष(विशिष्ट)विषयकत्वेन न तत्राव्याप्तिः। किञ्च सिद्धान्ते धारावाहिकबुद्धिस्थले न ज्ञानभेदः, किन्तु यावद् घटस्मरणं* घटाकारान्तःकरणवृत्तिरेकैव, नतु नाना। वृत्तेः स्वविरोधिवृत्त्युत्पत्तिपर्यन्तं स्थायित्वाभ्युपगमात्। तथाच तत्प्रति-**

वाहिकबुद्धौ नाव्याप्तिरित्यन्वयः। तत्र हेतुमाह — **धारावाहिके**ति। ननु नीरूपत्वेन कालस्यातीन्द्रियत्वात् कथं चाक्षुषत्वमित्याशङ्क्य किं नीरूपमात्रस्याचाक्षुषत्वमुत द्रव्यस्य। नाद्यः, नीरूपस्यापि रूपस्य चाक्षुषत्वाभ्युपगमात्। न द्वितीयः, इदानीं घटो वर्तत इति बुद्ध्या नीरूपस्यापि कालस्य चाक्षुषत्वानुभवात्। नचोपनीतत्वेन क्षणभानमस्त्विति वाच्यम्। क्षणस्य पूर्वं नियमेनाननुभूतत्वेनोपनयासिद्धेरित्याह — **नीरूपस्यापी**ति। नचाकाशादेरपि-प्रत्यक्षतापत्तिः। इष्टापत्तेः। यद्वा नीरूपत्वाविशेषेऽपि फलबलेन कस्यचिदेव प्रत्यक्षत्वं कस्यचिन्नेत्यभ्युपगम्यते। यथा महत्त्वसामानाधिकरण्याविशेषेऽपि घटगतरूपस्य प्रत्यक्षत्वं, नतु तद्गतगुरुत्वादेरिति भावः। ननु मा भूत् प्रत्यक्षरूपधारावाहिकज्ञानेऽव्याप्तिः। तथापि शाब्दरूपधारावाहिकज्ञानेऽव्याप्तिः स्यादेव, तत्रापदार्थस्यावाक्यार्थस्य[1] क्षणस्याविषयत्वात्। किञ्च निरन्तरोत्पन्नघटादिप्रत्यक्षेऽव्याप्तिस्तदवस्थैव, तस्य तत्तत्क्षणांशेऽज्ञातार्थावगाहित्वेऽपि घटांशे ज्ञातांशार्थावगाहित्वस्य प्रपितामहेनापि निराकर्तुमशक्यत्वादित्यपरितोषादाह — **किञ्चेति। न ज्ञानभेद** इति। नच ज्ञानसामग्र्याः सत्त्वाद् द्वितीयादिक्षणेऽपि ज्ञानान्तरोत्पत्तिरिति वाच्यम्। परमते मनस इव सामग्रीस्वाभाव्यान्न ज्ञानान्तरमुत्पद्यते। अन्यथा परमते तत्रैव युगपदनेकज्ञानोत्पत्तिप्रसङ्गात्। नचोत्तरोत्तरज्ञाने पूर्वपूर्वज्ञानस्य कारणत्वात् परमते न युगपदनेकज्ञानमिति वाच्यम्। अत्र किं पूर्वज्ञानस्योत्तरज्ञाने पूर्वज्ञानत्वेन हेतुत्वमुत विशेषणज्ञानत्वेन। नाद्यः, अनङ्गीकारात्। न द्वितीयः, विशेषणज्ञानस्य विशिष्टज्ञानजनकत्वे मानाभावात्। प्राथमिकविशेषणज्ञानस्याप्यनेकज्ञानजननसामर्थ्यसत्त्वेन युगपदनेकज्ञानोत्पत्तिप्रसङ्गाच्चेति भावः। **ननु नाने**ति। गौरवादिति भावः। ननु वृत्तिरूपज्ञानस्याशुतरविनाशित्वेन कथं तावत्कालावस्थानमित्यत आह— **वृत्ते**रिति। तथाचाशुतरविनाशित्वमसिद्धमिति

१. 'र्थस्यावि' क. पाठः.

* णं तावत् घटेति मुद्रितपुस्तकपाठः.

भावः। यद्वा नानात्वाभावे हेतुमाह — **वृत्तेरिति**। **स्वविरोधीति**। यस्यां वृत्तौ जातायां पूर्वा वृत्तिर्नश्यति सैव विरोधिनी, नतु विरोधितावच्छेदकमनुगतमस्ति। नचोत्तरवृत्तित्वं तथा। अयं घटः अयं पट इति व्यत्यस्तधारास्थले पटवृत्त्यनन्तरमपि घटस्मरणदर्शनेन घटाकारवृत्त्यन्तराकल्पनात्, तदुत्तरपटवृत्तेः पूर्ववृत्तावनिवर्तकत्वेन व्यभिचारात्, रजतभ्रमस्थले रजताकाराविद्यावृत्तेः पूर्वोत्पन्नेदंवृत्त्यनिवर्तकत्वाच्चेति भावः। नन्वस्तु वृत्तेरेकत्वं, तथापि ज्ञानस्यैकत्वे किमायातम्। वृत्तेर्जडत्वेन ज्ञानत्वाभावादित्यत आह — **तथाचेति**। नन्वेवमपि प्रत्यक्षस्थले दिनान्तरे जायमानस्य घटज्ञानस्य नानात्वेन तत्राव्याप्तिः, पूर्वानुभूतघटस्यैव भासमानत्वादिति चेत्। न। अनधिगतपदेन स्वसमानविषयक[1]ज्ञानाजन्यत्वस्य विवक्षितत्वात्। पूर्वप्रत्यक्षज्ञानस्य स्वसमानविषयोत्तरप्रत्यक्षज्ञाने हेतुत्वाभावान्नाव्याप्तिः। स्मृतेश्च स्वसमानविषयपूर्वानुभवजन्यत्वनियमान्नातिव्याप्तिः। नन्वखण्डाकारवृत्तावापातज्ञानस्य धर्मिज्ञानरूपस्य स्वसमानविषयस्य शुद्धगोचरस्य विचारादिद्वारा हेतुत्वेन तत्राव्याप्त्याप(त्तेः ? त्तिः), तस्याः स्वसमानविषयज्ञानाजन्यत्वाभावात्। तादृशज्ञानाजन्यत्वं हि किं तज्ज्ञानाकार्यत्वम्, उत तज्ज्ञानाप्रयोज्यत्वम्। नाद्यः, पूर्वानुभवस्य संस्कारेऽन्यथासिद्धत्वेन स्मृतेस्तज्जन्यत्वाभावादतिव्याप्त्यापत्तेः। न द्वितीयः, अखण्डाकारवृत्तेरापातज्ञानकार्यत्वाभावेऽपि तत्प्रयोज्यत्वेनाव्याप्तितादवस्थ्यात्। नन्वत्राप्रामाण्यशङ्काशून्यस्वसमानविषयज्ञानाजन्यत्वं विवक्षितम्। तथाचापातज्ञानस्याप्रामाण्यशङ्काकलङ्कितत्वेनाखण्डाकारवृत्तौ नाव्याप्तिरिति चेत्। तदपेशलम्। तर्हि यत्र पूर्वानुभवस्याप्रामाण्यशङ्काकलङ्कितत्वं तत्र स्मृतावतिव्याप्तेर्वज्रले[2]पायितत्वादिति चेत्। तदविचारितरमणीयम्। अत्र हि तादृशज्ञानाजन्यत्वपदेन तादृशज्ञानकार्यत्वाभावस्य विवक्षिततया स्मृतेश्च पूर्वानुभवकार्यत्वेन तत्रातिव्याप्त्यनवकाशात्। नच संस्कारेणान्यथासिद्धिः, व्यापा[3]रेण व्यापारिणोऽन्यथासिद्ध्यभावात्। अन्यथा चक्षुरादेः स्वव्यापा[4](रेणा)न्यथासिद्धत्वेन प्रत्यक्षहेतुत्वं न स्यात्। नचैवमापातज्ञानस्यापि विचारादिद्वारा तत्र हेतुत्वेन उक्तदोषस्तदवस्थ इति वाच्यम्। तस्य श्रवणमननादिबहुव्यापारव्यवहितत्वेनाखण्डाकारवृत्तौ हेतुत्वाभावात्। अन्यथा यागप्रागभावस्यापि यागादिद्वारा स्वर्ग-

१. 'यपूर्वानुभव', २. 'लेपत्वा', ३. 'रे व्या', ४. 'रान्य' क. पाठः.

**फलितचैतन्यरूपं** *घटज्ञानमपि तत्र तावत्कालीनमेकमेवेति नाव्याप्तिशङ्कापि । ननु सिद्धान्ते घटादेर्मिथ्यात्वेन बाधितत्वात् कथं तज्ज्ञानं प्रमाणम् । उच्यते — ब्रह्मसाक्षात्कारानन्तरं हि घटादीनां बाधः, 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' इति श्रुतेः । न तु संसारदशायां, 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इति श्रुतेः । तथाचाबाधितपदेन संसारदशायामबाधितत्वं विवक्षितमिति न घटादिप्रमायामव्याप्तिः । तदुक्तं —

---

हेतुत्वापत्तेः, इदानीन्तनशरीरस्यापि यागादिद्वारा स्वर्गहेतुत्वप्रसङ्गाच्चेति बहु व्याकुलीस्यात् । परमार्थतस्त्वापातज्ञानस्य तज्जनकत्वेऽपि सप्रकारकत्वस्य ज्ञानविशेषणत्वेनापातज्ञानस्य निर्विकल्पकरूपत्वान्नाव्याप्तिशङ्कापि । तस्मादुक्तविवक्षा शोभा(का ? क)रीत्यलमतिप्रसङ्गेनेत्येतदभिसन्धायाह — **नाव्याप्तिशङ्कापीति** । प्रमालक्षणद्वयस्यापि[1]व्याप्तिं शङ्कते — **नन्विति** । अव्याप्तिं परिहरन् तदुपयोगितया घटादीनां व्यवहारदशायामबाधितत्वं साधयति — **उच्यते इति** । नन्वत्राबाधितत्वं किं सविलासाविद्यानिवृत्तिराहित्यमुत विलासनिवृत्त्यभावमात्रम् । नाद्यः, प्रातिभासिकरजतस्य मूलाविद्याकार्यत्वपक्षेऽविद्याया ब्रह्मसाक्षात्कारमात्रनिवर्त्यतया शुक्तितत्त्वज्ञानानिवर्त्यत्वात् तत्रोक्ताबाधितत्वसम्भवेनातिव्याप्तिप्रसङ्गात् । न द्वितीयः, संसारदशायामपि मुसलप्रहारेण घटादिनिवृत्तेर्बाधितत्वात् । तदर्थं संसारकालीनाबाधितत्वविवक्षावैयर्थ्यादिति चेत् । मैवं वोचः । प्रातिभासिकरजतस्य तूलाविद्याकार्यत्वपक्ष एवैतल्लक्षणप्रणयनेन प्रथमपक्षस्याश्रयणान्नातिव्याप्तिः । तथाच सत्याह — **ब्रह्मसाक्षात्कारानन्तरं हि घटादीनां बाधः** इत्यादिना । बाध इति । उपादानेन सह निवृत्तिरित्यर्थः । तत्र मानमाह — **यत्र त्विति** । यत्र यदा सर्वं प्रपञ्चजातम् आत्मैवाभूद् आत्ममात्रं परिशिष्टमभूत् तदा केन कारणेन कं विषयं पश्येदित्यर्थः । **नत्विति** । बाध इत्यनुषज्यते । अस्त्वेवं, तथाप्यव्याप्तिरूपव्याधेः किमौषधमित्यत आह — **तथाचेति** । यद्येवमपि यत्र सन्निकृष्टं लौहित्यं स्फटिके वक्ष्यमाणप्रकारेणान्यथाख्यातिविधया भासते, तद्भ्रमेऽतिव्याप्तिरेव, तत्र लौहित्यस्यै[2] संसारदशाया-[3]

---

१. 'स्याव्या' क. पाठः. २. 'मू' ख. पाठः. ३. 'स्याबा' क. पाठः.

---

* 'घटादिज्ञा' इति मुद्रितपुस्तकपाठः ।

"देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥"

इति । आत्मनिश्चयात् ब्रह्मसाक्षात्कारपर्यन्तमित्यर्थः । लौकिकमिति घटादिज्ञानमित्यर्थः ॥

तानि* च प्रमाणानि षट् प्रत्यक्षानुमानोपमानागमार्थापत्त्य-

---

मबाधितत्वात् । तथाप्यागन्तुकदोषाजन्यत्वस्याबाधितविषयकपदेन विवक्षिततया भ्रमस्य चागन्तुकपित्तादिदोषजन्यतया नातिव्याप्तिः । अतएवागन्तुकदोषजन्यत्वं भ्रमत्वप्रयोजकमिति ग्रन्थकृतोक्तम् । अतएव प्रातिभासिकरजतस्य मूलाविद्याकार्यत्वे तत्रातिव्याप्तिस्तदवस्थेति निरस्तम् । उक्तार्थस्य मतद्वयेऽप्यदुष्टत्वात् । तदयं निर्गलितोऽर्थः — आगन्तुकदोषाजन्यत्वे सति सप्रकारकस्वसमानविषयकज्ञानाजन्यज्ञानत्वं प्रमात्वमिति । अत्र यद्विषयत्वावच्छेदेन ज्ञानस्य जनकत्वमभिमतं, तत्र स्वसमानविषयत्वं विवक्षितम् । तेन प्रमुष्टतत्ताकस्मरणे नातिव्याप्तिरिति ध्येयम् । उक्तार्थेऽभियुक्तवचनं प्रमाणयति — **तदुक्त**[२]**मिति** । आत्मनिश्चयस्य घटादिबाधकतया तत्साधकत्वानुपपत्तेर्मर्यादया व्याचष्टे — **ब्रह्मेति** । नन्वस्तु लौकिकस्य प्रमाणत्वं, तथापि घटादिज्ञाने किमायातमित्याशङ्क्य लोके भवं लौकिकमिति घटादिज्ञानं विवक्षितमित्याह— **घटादीति** ॥

[३]प्रमाणं विभजते — **तानि** चेति । प्रथमं

"प्रत्यक्षमानस्योद्देशः सर्वमानोपयोगिनः ।
बहूनां सम्मतत्वेन ह्यनुमानमतः परम् ॥
अथोपमानं निर्दिष्टं सङ्गतिग्राह[४]कं हि तत् ।
श्रुतार्थापत्तिहेतुत्वादागमस्य ततः परम् ॥
पश्चात् तु भावग्राहि[५]त्वसाधर्म्येणार्थकल्पनम् ।
पश्चात् त्वभावमानस्य भावमानोपजीविनः ॥"

---

१. 'यप' ख. पाठः. २. 'क्त इति', ३. 'करणं वि', ४. 'हि', ५. 'त्वात् सा' क. पाठः.

---

* 'नि प्र' मुद्रितपुस्तकपाठः.

**नुपलब्धिभेदात् । तत्र प्रत्यक्षप्रमायाः करणं प्रत्यक्षप्रमाणम् । प्रत्यक्षप्रमा चात्मचैतन्यमेव, 'यत् साक्षादपरोक्षाद्* ब्रह्मे'ति श्रुतेः । अपरोक्षादित्यस्यापरोक्षमित्यर्थः । ननु चैतन्यमनादि, तत् कथं चक्षुरादेस्तत्करणत्वेन प्रमाणत्वमिति । उच्यते । चैतन्यस्यानादित्वेऽपि तदभिव्यञ्जकान्तःकरणवृत्तिरिन्द्रियसन्निकर्षादिना जायत इति वृत्तिविशिष्टं चैतन्यमादिमदित्युच्यते । ज्ञानावच्छेदकत्वाच्च वृत्तौ ज्ञानत्वोपचारः । तदुक्तं विवरणे — 'अन्तःकरणवृत्तौ ज्ञानत्वोपचारात्' इति ।**

---

इति विभागो बोध्यः । तत्र तेषु प्रमाणेषु मध्ये । प्रत्यक्षज्ञानकरणं प्रत्यक्षमित्युक्ते रूप्यादिभ्रमकरणादावतिव्याप्तिः । अत उक्तं — **प्रमाया** इति । प्रमाकरणमित्युक्तेऽनुमानादावतिव्याप्तिरत उक्तं — **प्रत्यक्षे**ति । प्रत्यक्षप्रमात्वग्रहणमन्तरेण तत्करणत्वमपि दुर्ग्रहमित्यतः प्रत्यक्षप्रमां निरूपयति — **प्रत्यक्षे**ति । चैतन्यं प्रत्यक्षप्रमेत्यर्थः । आत्मपदं स्पष्टार्थम् । प्रमाग्रहणं च प्रकृताभिप्रायेण । यच्चैतन्यं तत् प्रत्यक्षमित्येव तात्पर्यम् । चैतन्यस्य प्रत्यक्षत्वे श्रुतिं प्रमाणयति — **यत् साक्षात्** इति । पटादिसाधारणापरोक्षत्वभ्रान्तिवारणायाह — **साक्षादि**ति । पटादीनामपरोक्षचैतन्याध्यासादपरोक्षता । चैतन्यस्य स्वत एवेत्यर्थः । नन्वपरोक्षादिति पञ्चम्या ब्रह्मणो जन्यत्वमुच्यते इति भाति । तदयुक्तं, 'नित्यं (वि)ज्ञानमि'त्यादिश्रुतिविरोधादित्यत आह — **अपरोक्षमि**ति । लक्षणस्यासम्भवं शङ्कते — **नन्वि**ति । किं चैतन्यस्य स्वरूपेणानादित्वमभिमतमुत वृत्तिविशिष्टतयेति विकल्प्याद्यमङ्गीकरोति — **चैतन्यस्ये**ति । द्वितीयेऽनादित्वमसिद्धमित्याह — **तदभिव्यञ्जके**ति । इतिर्हेतौ । ननु तर्हि वृत्तिज्ञानमादायैव तज्जनकत्वं लक्षणं कथ्यताम् । किं तद्विशिष्टचैतन्यजनकत्वस्य लक्षणत्वाभिधानेन । अत एव स्वरूपज्ञानं वृत्तिज्ञानं चेति ज्ञानद्वयं साम्प्रदायिका आहुरित्यत आह — **ज्ञाने**ति । चकारस्त्वर्थः वृत्तावित्यनेन सम्बध्यते । तथाच वृत्तिर्न ज्ञानं, जडत्वाद् घटवत् । नच ज्ञानत्वव्यवहारो न स्यादिति वाच्यम् । तस्यौपचारिकत्वादिति भावः । उपचारहेतुमाह — **ज्ञानावच्छेदकत्वादि**ति । उपचारे स्वप्रकाशग्रन्थीयविवरणाचार्यवचनं प्रमाणमाह — **तदुक्तमि**ति । ननु वृत्तिर्नाम

---

१. 'मा त्वत्र चै', २. 'न्यमना' ख. पाठः. ३. 'द्ग्रहण' क. पाठः. ४. 'स्यज्ञा' ख. पाठः.

---

* 'क्षादिति' मुद्रितपुस्तकपाठः.

**ननु निरवयवस्यान्तःकरणस्य परिणामात्मिका वृत्तिः कथम् । इत्थं— न तावदन्तःकरणं निरवयवं, सादिद्रव्यत्वेन सावयवत्वात् । सादित्वं च 'तन्मनोऽसृजत' इत्यादिश्रुतेः । वृत्तिरूपज्ञानस्य मनोधर्मत्वे च 'कामः सङ्कल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्हीर्धीर्भीरित्येतत् सर्वं मन एव' इति श्रुतिर्मानम् । धीशब्देन ज्ञानाभिधानात् । अतएव कामादेरपि मनोधर्मत्वम् । ननु कामादेरन्तःकरणधर्मत्वे अहमिच्छामि अहं जानामि अहं बिभेमि इत्याद्यनुभव आत्मधर्मत्वमव-**

---

परिस्पन्दो वा, परिणामो वा । नाद्यः, अन्तःकरणं घटाद्याकारेण परिणमत इति सिद्धान्तविरोधात् । न द्वितीयः अन्तःकरणं न परिणामि, निरवयवत्वाद् ब्रह्मवदित्याह — **नन्विति** । हेत्वसिद्धया दूषयति — **न तावदिति** । अन्तःकरणं सावयवं सादिद्रव्यत्वाद्, मृद्वत् । आत्मनि व्यभिचारवारणाय **सादीति** । रूपादौ व्यभिचारादाह — **द्रव्येति** । हेतोर्विशेषणासिद्धिमाशङ्क्याह — **सादित्वं चेति** ।

''एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।''

इत्यादिश्रुतिरादिपदग्राह्या । नन्विन्द्रियार्थसन्निकर्षजन्या वृत्तिर्निर्विकल्पकरूपा, सा चेन्द्रियधर्मः । सविकल्पकज्ञानं तु मनोधर्मः, अध्यवसायरूपज्ञानं बुद्धिधर्मः इति साङ्ख्या मन्यन्ते । तदुक्तम् —

''अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥''

इति । तान् प्रति सर्वस्य वृत्तिज्ञानस्य मनोधर्मत्वं साधयति — **वृत्तिरूपज्ञानस्येति** । लौकिकत्वशास्त्रीयत्वाभ्यां कामसङ्कल्पयोर्भेदः । नन्वनया श्रुत्या कामादीनामेव मनोधर्मत्वं प्रतिपाद्यते, न तु वृत्तिज्ञानस्यापीत्यत आह— **धीशब्देनेति** । ननु श्रुतिबलाज्ज्ञानस्य मनोधर्मत्वे कामादेरपि मनोधर्मत्वं स्यादित्यत्रेष्टापत्तिमाह — **अतएवेति** । प्रत्यक्षेण ज्ञानेच्छादेरात्मधर्मत्वेऽवगते मनोधर्मत्वप्रतिपादकश्रुतिरौपचारिकीति शङ्कते— **नन्विति** । आत्मनो निर्विकारताया उत्तरत्र वक्ष्यमाणत्वादहमिच्छामीत्याद्यनुभवस्य भ्रान्तित्वे वक्तव्ये स्मर्यमाणारोपत्वकल्पनायां प्रातिभासिकत्वापत्तौ संसारदशायां बाधापत्त्या 'कामः सङ्कल्प'

**गाहमानः कथमुपपद्यते । उच्यते । अयःपिण्डस्य दग्धृत्वाभावेऽपि दग्धृत्वाश्रयवह्नितादात्म्याध्यासाद् यथायो दहतीति व्यवहारः, तथा सुखा*सुखाद्याकारपरिणाम्यन्तःकरणैक्याध्यासादहं सुखी अहं दुःखी-त्यादिव्यवहारः । नन्वन्तःकरणस्येन्द्रियतयातीन्द्रियत्वात् कथं प्रत्यक्ष-विषयतेति । उच्यते । न तावदन्तःकरणमिन्द्रियमित्यत्र मानमस्ति । 'मनःषष्ठानीन्द्रियाणि' इति भगवद्गीतावचनं प्रमाणमिति चेत् । न । अनिन्द्रियेणापि मनसा षट्त्वसङ्ख्यापूरणाविरोधात् । नहीन्द्रियगत-सङ्ख्यापूरणमिन्द्रियेणैवेति नियमः 'यजमानपञ्चमा इडां भक्षयन्ती'-त्यत्र ऋत्विग्गतपञ्चत्वसङ्ख्याया अनृत्विजापि यजमानेन,**

---

इत्यादिश्रुत्यनुग्रहायानुभूयमानारोपत्वं वाच्यमित्याशयेन परिहरति — **उच्यते** इति । अनुभूयमानारोपत्वे दृष्टान्तमाह — **अयःपिण्डस्ये**ति । नन्वन्तःकरणस्य प्रत्यक्षत्वे स्यादयमनुभूयमानारोपः । नच तत् सम्भवति । अन्तःकरणमप्रत्यक्षम् इन्द्रियत्वेनातीन्द्रियत्वाच्चक्षुरादिवदित्याशयेन चोदयति — **नन्वि**ति । हेत्वसिद्ध्या परिहरति — **उच्यते** इति । मनस इन्द्रियत्वे किं प्रत्यक्षं मानमुतागमः, आहो-स्विदनुमानमिति विकल्प्याद्यं दूषयति — **न तावदि**ति । अन्तःकरणस्य न्याय-मतेऽतीन्द्रियत्वाद्, मन्मते तस्य साक्षिवेद्यत्वेऽपि इन्द्रियत्वेन रूपेण साक्षिणा अगृह्यमाणत्वादिति भावः । द्वितीयमनुवदति — **मनःषष्ठानी**ति । यज्जातीय-गतसङ्ख्यापूरकत्वं यस्य निर्दिश्यते, तस्य तज्जातीयत्वमिति नियमः । यथा शत्रुघ्नतुर्या दाशरथयः इत्युक्ते तुर्यत्वसङ्ख्यापूरकस्य शत्रुघ्नस्य दाशरथित्वं, यथावा सहदेवपञ्चमाः पाण्डवाः इत्युक्ते पञ्चत्वसङ्ख्यापूरकस्य सहदेवस्य पाण्ड-वत्वं, तथेन्द्रियगतषट्त्वसङ्ख्यापूरकस्य मनस इन्द्रियत्वमुपगम्यत इति शङ्का-वादिनो हृदयम् । अप्रयोजकत्वान्नोक्तनियमः साधुरित्याह — **न अनिन्द्रिये-णे**ति । उक्तन्यायमनूद्य व्यभिचारेणापि दूषयति — **नही**ति । नन्वत्र विशे-ष्यवाचकपदस्याश्रूयमाणतया ऋत्विक्पदमध्याहार्यम् । तच्च न सम्भवति, ब्राह्म-णपदाध्याहारेणाप्यन्वयसिद्धेः । नचानृत्विजामपि भक्षणप्रसक्तिरिति वाच्यम् । सन्निधानादृत्विगन्वयसिद्धेः । एवञ्च ब्राह्मणजातीयगतपञ्चत्वसङ्ख्यापूरकत्वं

---

१. 'णं प्र', २. 'प्रा' क. पाठः.

---

* 'खाबा' इति मुद्रितपुस्तकपाठः.

"वेदानध्यापयामास महाभारतपञ्चमान्"

इत्यत्र वेदगतपञ्चत्वसङ्ख्याया अवेदेनापि भारतेन पूरणदर्शनाद्,

"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः"

इत्यादिश्रुत्या मनसोऽनिन्द्रियत्वावगमाच्च । नचैवं मनसोऽनिन्द्रियत्वे सुखादिप्रत्यक्षस्य साक्षात्त्वं न स्याद्, इन्द्रियाजन्यत्वादिति वाच्यम् । नहीन्द्रियजन्यत्वेन ज्ञानस्य साक्षात्त्वम्, अनुमित्यादेरपि मनोजन्यतया साक्षात्त्वापत्तेः । ईश्वरज्ञानस्याजन्यस्य साक्षात्त्वानुपपत्तेश्च । सिद्धान्ते

---

ब्राह्मणस्यैवेति न व्यभिचारः । नच क्षत्रियवैश्ययोर्यजमानत्वे तथाप्यनैकान्तिकं इति वाच्यम् । द्विजपदाध्याहारेण तत्र तन्निवृत्तेरित्यपरितोषादुदाहरणान्तरमाह — **वेदानिति** । न केवलं मनस इन्द्रियत्वे साधकाभावः, प्रत्युतानिन्द्रयत्वसाधकमप्यस्तीत्याह — **इन्द्रियेभ्य** इति । यद्यपीयं श्रुतिर्मनोऽनिन्द्रियमिति न ब्रवीति, तथापि मनस 'इन्द्रियेभ्यः' इत्यनेनैव निर्दिष्टत्वात् पृथङ्निर्देशानुपपत्त्या मनसोऽनिन्द्रियत्वमवगम्यत इति भावः । नन्वत्र मनस इन्द्रियत्वावच्छिन्नप्रतियोगिकभेदप्रतिपादनार्थं न पृथङ्निर्देशः, किन्तु चक्षुराद्यपेक्षया मनोनिग्रहणमतिदुर्घटमिति सूचनार्थम् । नहि ब्राह्मण आगतो वसिष्ठोऽपीत्युक्ते वसिष्ठस्य ब्राह्मणभिन्नत्वं प्रतीयते, इति यदि कश्चिद् ब्रूयात् तं प्रति प्रमाणान्तरं सूचयति — **आदीति** । 'ज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चकबुद्धिमनोपेतं लिङ्गशरीरमि'ति श्रुत्या ज्ञानेन्द्रियाणि पञ्चैवेत्यवगमान्मनसोऽनिन्द्रियत्वम् । तदुक्तमाश्रमचरणैः —

"प्रमाणसहकारित्वाद् विषयस्याप्यभावतः ।
न प्रमाणं मनोऽस्माकं प्रमादेराश्रयत्वतः ॥"

इति । ननु सुखाद्युपलब्धिरिन्द्रियजन्या, साक्षात्कारत्वाद् रूपादिसाक्षात्कारवदित्यनुमानं मनस इन्द्रियत्वे मानमिति तृतीयं पक्षमुत्थाप्य निराकरोति — **नचैवमिति** । विपक्षे बाधकमाह — **मनस** इति । अप्रयोजकत्वेन निराकरोति— **नहीति** । किमिन्द्रियजन्यत्वमात्रं प्रत्यक्षत्वे प्रयोजकमुत इन्द्रियत्वेनेन्द्रियजन्यत्वमिति विकल्प्य आद्यं निराकरोति — **अनुमित्यादेरिति** । द्वितीयं निरस्यति— **ईश्वरेति** । ननु प्रत्यक्षत्वे प्रयोजकान्तरस्य निरूपयितुमशक्यत्वादिन्द्रियजन्यत्वमेव प्रयोजकमिति चोदयति — **सिद्धान्ते** इति । प्रयोजका-

---

१. 'त्वानव', २. 'कमिति', ३. 'नोऽनि', ४. 'यम् । त' ख. पाठः.

**प्रत्यक्षत्वप्रयोजकं किमिति चेत्, किं ज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकं पृच्छसि, किं वा विषयगतस्य । आद्ये प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभेद इति ब्रूमः । तथाहि — त्रिविधं चैतन्यं *प्रमातृचैतन्यं, प्रमाणचैतन्यं, विषयचैतन्यं चेति । तत्र घटाद्यवच्छिन्न-चैतन्यं विषयचैतन्यम् । अन्तःकरणवृत्त्यवच्छिन्नचैतन्यं प्रमाणचैतन्यम् । अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम् । तत्र यथा तटाकोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति, तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा घटादिविषयदेशं गत्वा घटादिविषयाद्याकारेण परिणमते । स एष परिणामो वृत्तिरि-त्युच्यते । अनुमित्यादिस्थले तु नान्तःकरणस्य वह्न्यादिदेशगमनं,**

---

न्तरानिरूपणमसिद्धमिति परिहरति—**किमिति** । यद्यपि ज्ञप्तिगतप्रत्यक्षत्वस्यैव प्रयोजकमत्र प्रस्तुतं, नतु विषयगतस्य । तथापि विषयप्रत्यक्षत्वे इन्द्रियज-न्यत्वघटितस्य प्रयोजकत्वेन क्लृप्तत्वात् ज्ञानगतप्रत्यक्षत्वेऽपि तदेव प्रयोजक-मित्याशङ्क्येत. तन्मा शङ्कीति विषयप्रत्यक्षत्वस्यापि इन्द्रियाजन्यत्वोपपाद-नार्थं विकल्पः कृत इति मन्तव्यम् । आद्यस्य प्रयोजकमाह — **आद्य** इति । प्रमाणचैतन्यादिस्वरूपानवगमे तदभेदावगमो न सम्भवतीति प्रमाणचैतन्यादि-स्वरूपं प्रथमं प्रदर्शयति— **तथाहीति** । ननु सिद्धान्ते 'एकमेवाद्वितीयमि'त्या-दिवचनाच्चैतन्यस्यैकत्वेन त्रैविध्यकथनमनुपपन्नमित्याशङ्क्योपाधिभेदात् त्रैवि-ध्यमुपपादयति— **तत्रेति** । यद्यप्युद्देशानुसारेण प्रथमं प्रमातृचैतन्योपपादनमेवो-चितं, तथापि विषयचैतन्यादेः प्रकृतलक्षणोपयोगितयादौ तन्निरूपणं कृतम् । नचैवं प्रमातृचैतन्योपपादनवैयर्थ्यमिति वाच्यम् । वक्ष्यमाणविषयप्रत्यक्षलक्षणो-पयोगितया तदभिधानसम्भवादिति भावः । प्रमाणचैतन्यविषयचैतन्ययोरभेदं दर्शयितुं प्रमाणचैतन्यशरीरप्रविष्टवृत्तिस्वरूपमाह— **तत्रेति** । अन्तःकरणस्य शीघ्रगमने सामर्थ्यं सूचयति — **तैजसमिति** । ननु भवतूक्तप्रकारेण तस्य विषयाद्याकारेण परिणामः, तथापि वृत्तिस्वरूपे किमायातमित्यत आह — **स** इति । **अनुमित्यादिस्थले** इति । असन्निकृष्टवह्न्यादिस्थल इत्यर्थः ।

---

* विषयचैतन्यं प्रमाणचैतन्यं प्रमातृचैतन्यं च' इति मुद्रितपुस्तकपाठः.

बह्न्यादेश्चक्षुराद्यसन्निकर्षात् । तथा अयं घट इत्यादिप्रत्यक्षस्थले घटादेस्तदाकारवृत्तेश्च बहिरेकत्र देशे समवधानात् तदुभयावच्छिन्न-चैतन्यमेकमेव, विभाजकयोरप्यन्तःकरणवृत्तिघटादिविषययोरेकदेश-स्थत्वेन भेदाजनकत्वात् । अतएव मठान्तर्वर्तिघटावच्छिन्नाकाशो न मठाकाशाद् भिद्यते । तथाच अयं घट इति प्रत्यक्षस्थले घटाकार-वृत्तेर्घटसंयोगितया घटावच्छिन्नचैतन्यात् तद्वृत्त्यवच्छिन्नचैतन्यस्या-भिन्नतया तत्र घटज्ञानस्य घटांशे प्रत्यक्षत्वम् । सुखदुःखाद्यवच्छिन्नस्य चैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य च नियमेनैकदेशस्थितोपाधिद्वया-वच्छिन्नत्वाद् नियमेनाहं सुखीत्यादिज्ञानस्य प्रत्यक्षत्वम् । नन्वेवं स्ववृ-त्तिसुखादिस्मरणस्यापि सुखाद्यंशे प्रत्यक्षत्वापत्तिरिति चेत् । न । तत्र स्मर्यमाणसुखस्यातीतत्वेन स्मृतिरूपान्तःकरणवृत्तेर्वर्तमानत्वेन तत्रोपा-ध्योर्भिन्नकालीनतया तत्तदवच्छिन्नचैतन्ययोर्भेदात् । उपाध्योरेकदेश-

---

अपरोक्षस्थले वृत्तेर्विषयदेशनिर्गमनस्य प्रयोजनमाह — **तथाचेति** । ननु विभाजकयोर्भेदात् कथं तदवच्छिन्नचैतन्याभेदः इत्यत आह — **विभाज-कयोरिति** । घटादिरेव विषयो घटादिविषयः । अन्तःकरणवृत्तिश्च घटा-दिविषयश्चेति द्वन्द्वसमासः । तथाच भिन्नदेशस्थोपाधिभेद एवोपधेयभेद-प्रयोजक इति भावः । ननूपाधिभेदमात्रमुपधेयभेदप्रयोजकमस्तु लाघवाद्, नतु भिन्नदेशस्थितत्वमपि गौरवात् । अतएव जलभाजनरूपोपाधिभेदात् तत्प्रतिबिम्बितचन्द्रभेदव्यवहार इत्यत आह — **अतएवेति** । एवञ्च गौ-रवं प्रामाणिकमेवेति भावः । एकदेशस्थोपाधिद्वयस्योपधेयाभेदसमर्थनफल-माह — **तथाचेति** । **घटांश इति** । तद्गतगुरुत्वादिव्यावृत्त्यर्थमुक्तम् । **तद्-वृत्त्यवच्छिन्नेति** । सुखाद्याकारवृत्त्यवच्छिन्नेत्यर्थः । **सुखीत्यादिज्ञानस्येति** । वर्तमानसुखादिगोचरस्येत्यर्थः । **एवमिति** । उपाध्योरेकदेशसम्बन्धस्योपधेया-भेदप्रयोजकत्वं इत्यर्थः । **स्ववृत्तीति** । परवृत्तिसुखादिस्मरणस्थले परवृत्ति-सुखस्य तद्गोचरस्मृतिरूपवृत्तेश्च भिन्नदेशस्थत्वेन तत्रातिव्याप्त्यनवकाशात् स्ववृ-त्तीत्युक्तम् । परकीयसुखगोचरस्य परकीयसुखं स्मरामीति ज्ञानस्य स्मृत्यंशे प्रमात्रंशे च प्रत्यक्षत्वमिष्टमेवेत्यत उक्तं— **सुखाद्यंशे इति** । **उपाध्योरिति** । स्मर्यमाणसुखस्य तद्गोचरवृत्तेश्चेत्यर्थः । ननु लाघवेनोपाध्योरेकदेशस्थत्वमात्र-

---

१. 'कत्वमित्य' क. पाठः.

स्थत्वे सत्येककालीनत्वस्यैवोपधेयाभेदप्रयोजकत्वात् । यदि चैकदेशस्थत्वमात्रमुपधेयाभेदप्रयोजकं, तदाहं पूर्वं सुखीत्यादिस्मृतावतिव्याप्तिवारणाय वर्तमानत्वं विषयविशेषणं देयम् । नन्वेवमपि स्वकीयधर्माधर्मौ वर्तमानौ यदा शब्दादिना ज्ञायेते, तदा तादृशशाब्दादावतिव्याप्तिः । तत्र धर्माद्यवच्छिन्नतद्वृत्त्यवच्छिन्नचैतन्ययोरेकत्वादिति चेत् । न । योग्यत्वस्यापि विषयविशेषणत्वात् । अन्तःकरणधर्मत्वाविशेषेऽपि किञ्चिद् योग्यं किञ्चिदयोग्यमित्यत्र फलबलकल्प्यः स्वभाव एव शरणम् । अन्यथा न्यायमतेऽप्यात्मधर्मत्वाँत् सुखादिवद् धर्मादेः प्रत्यक्षत्वापत्तिर्दुर्वारा । नचैवमपि (सुखस्य) वर्तमानतादशायां (त्वहं ? त्वं) सुखीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षता स्यादिति वाच्यम् । इष्टत्वात् । दशमस्त्वमसीत्यादौ सन्निकृष्टविषये शब्दादप्यपरोक्ष-

---

मुपधेयाभेदप्रयोजकं, नत्वेककालत्वमपि, गौरवादित्यत आह — **उपाध्योरिति** । गृहैकदेशस्थितकिञ्चिद्घटावच्छिन्नाकाशस्य तद्घटनाशानन्तरं तत्प्रदेशस्थितघटान्तरावच्छिन्नाकाशेनाभेदव्यावृत्त्यर्थमेककालत्वविशेषणं प्रामाणिकमिति भावः । ननूक्तस्थले घटाकाशाभेद इष्ट एव, तद्घटावच्छिन्न आकाश एतद्घटेनाप्यवच्छिन्न इति प्रत्यभिज्ञानादित्यत आह — **यदि चेति** । स्मृतेश्चावर्तमानविषयत्वादिति भावः । ननु स्वस्य परकीयधर्माधर्मादिशाब्दज्ञानसमये तदीयधर्माधर्मादेस्तद्गोचरवृत्तेश्च भिन्नदेशस्थिततया तत्रातिव्याप्त्ययोगादित्याशङ्क्याह — **स्वकीयेति** । अवर्तमानधर्माधर्मयोर्वर्तमानपदेनैवातिव्याप्तिवारणाद् वर्तमानावित्युक्तम् । नन्वन्तःकरणधर्मत्वाविशेषात् सुखादिवद् धर्मादेरपि योग्यत्वमस्त्वित्याशङ्क्य किमेतद् विनीतस्य चोद्यमुत व्युत्थितस्य, नाद्य इत्याह — **अन्तःकरणेति** । द्वितीये त्वाह — **अन्यथेति** । एवमपि सुखस्मरणेऽतिव्याप्त्यभावेऽपि इत्यर्थः । **प्रत्यक्षतेति** । सुखाद्यवच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य नियमेनाभेदादिति भावः । ननु परोक्षज्ञानजननसमर्थस्य शब्दस्य कथमपरोक्षज्ञानजनकत्वं, विजातीयेन विजातीयोत्पत्त्यनुपपत्तेः । अन्यथा अश्वत्थबीजाद् यवाङ्कुरोत्पत्तिप्रसङ्गादित्याशङ्क्याह—**दशमस्त्वमसीति** । तथाच (नाद्या ? नद्यामा)क्रीडमाना

---

१. 'कालिकत्व', २. 'त्वद्ज्ञानादा', ३. 'त्वाविशेषेऽपि सु' इति मुद्रितपुस्तकपाठः।

**ज्ञानाभ्युपगमात् । अतएव पर्वतो वह्निमानित्यादिज्ञानमपि वह्न्यंशे परोक्षम्, पर्वतांशेऽपरोक्षम् । पर्वताद्यवच्छिन्नचैतन्यस्य बहिर्निःसृतान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्य चाभेदात् । वह्न्यंशे तु अन्तःकरणवृत्तिनिर्गमनाभावेन वह्न्यवच्छिन्नचैतन्यस्य प्रमाणचैतन्यस्य च परस्परं भेदः । तथाचानुभवः पर्वतं पश्यामि, वह्निमनुमिनोमीति । न्यायमते च पर्वतमनुमिनोमीत्यनुव्यवसायापत्तिः । असन्निकृष्टपक्षकानु-**

---

दश पञ्चजना अन्योन्यं स्वस्वव्यतिरिक्तपुरुषान् गणयन्तस्तेषु कञ्चन पुरुषमलब्ध्वान्योन्यं गाढमालिङ्गमाना रुदन्ति । तान् दृष्ट्वा दैवादागतो वणिक्कश्चित् कृपया ब्रवीति दशमस्त्वमसीति । तत्र सन्निकृष्टेऽपि वाक्यस्य प्रत्यक्षज्ञानजननसामर्थ्यावधारणात् । यथा चैवं तत् तथा प्रयोजनपरिच्छेदे ग्रन्थकार एव वक्ष्यति । ननु पर्वतो वह्निमानिति ज्ञानमपरोक्षं स्यात्, उक्तलक्षणस्य सत्त्वाद् विशे(ष? ष्य)स्य पर्वतस्य सन्निकृष्टत्वादित्याशङ्क्य, किं वह्न्यंशे पक्षतावच्छेदकसामानाधिकरण्यांशे वा पर्वतांशे वेति विकल्प्य आद्यद्वितीयौ दूषयति — **अतएवे**ति । असन्निकृष्टत्वादित्यर्थः । अत्र चापिशब्दो भिन्नक्रमः वह्न्यंशे इत्यनेन सम्बध्यते । तथाच वह्निमानिति ज्ञानं न केवलं वह्न्यंशे परोक्षं, किन्तु सामानाधिकरण्यांशेऽपीति बोध्यम् । तृतीये इष्टापत्तिमाह— **पर्वतांश** इति । सन्निकृष्ट इति शेषः । पर्वतांशस्यापरोक्षत्वे हेतुमाह — **पर्वतादी**ति । ननु सन्निकृष्टत्वमात्रेण पर्वतांशस्यापरोक्षत्वे सन्निकृष्टवह्न्यादिस्थले सिषाधयिषया वह्न्यनुमानं न स्यात् । वह्नावपि तदुक्तन्यायेनापरोक्षत्वसम्भवात् । उभयरूपत्वे प्रत्यक्षलक्षणमतिव्यापकं स्यादिति चेत् । न । अनुमित्यनुत्पादस्येष्टत्वात् । नच सामग्र्यां सत्यां कथं नानुमितिरिति वाच्यम् । प्रत्यक्षसामग्र्यास्तत्र प्रतिबन्धकत्वात् । यदि चेच्छाघटितसामग्र्या बलवत्त्वान्न तथा, तदा समुद्रतरणेच्छायां सत्यां समुद्रतरणमपि स्यात् । यदि च तत्र बाधान्न तथा, तदा प्रकृतेऽपि तुल्यमिति भावः । वह्नेश्चासन्निकृष्टत्वान्न तत्रापरोक्षप्रयोजकमित्याह — **वह्न्यंश** इति । ननु पर्वतमनुमिनोमीत्यनुभवबलात् पर्वतांशेऽपि तज्ज्ञानं परोक्षं स्यादित्याशङ्क्यानुभवोऽसिद्ध इत्याह — **तथाचे**ति । प्रसङ्गान्न्यायमतं दूषयति — **न्यायमते चे**ति । असन्निकृष्टविषयानुमितौ तूक्तव्यवस्था न शोभत इत्याह — **असन्निकृष्टे**ति । ननु सुरभि

मितौ[1] सर्वांशेऽपि ज्ञानं परोक्षम् । सुरभि चन्दनमित्यादिज्ञानमपि चन्दनखण्डांशेऽपरोक्षं, सौरभांशे तु परोक्षं, सौरभस्य चक्षुरिन्द्रियायोग्यतया योग्यत्वघटितस्य निरुक्तलक्षणस्याभावात् । नचैवमेकत्र ज्ञाने परोक्षत्वापरोक्षत्वयोरभ्युपगमे तयोर्जातित्वं न स्यादिति वाच्यम् । इष्टत्वात् । जातित्वोपाधित्वपरिभाषायाः सकलप्रमाणागोचरतया अप्रामाणिकत्वात् । घटोऽयमित्यादिप्रत्यक्षं हि घटत्वादिसद्भावे

---

चन्दनमिति ज्ञानमपि प्रत्यक्षं स्यात् । तत्राप्युक्तप्रयोजकस्य सत्त्वादित्याशङ्क्य किं चन्दनखण्डांशे प्रत्यक्षत्वमापादयसि, उत सौरभांशे । आद्य इष्टापत्तिरित्याह — **सुरभि चन्दन**मिति । द्वितीयं दूषयति — **सौरभांशे त्वि**ति । सौरभाकारवृत्तेः स्मरणरूपत्वादिति भावः । ननु सौरभस्यापि योग्यत्वेनोक्तलक्षणसत्त्वात् कथं परोक्षत्वमिति चेत् । न । तत्तादिन्द्रिययोग्यत्वमित्यस्य विषयविशेषणत्वादित्याशयेनाह — **सौरभस्ये**ति । नन्वेवमहं सुखीत्यादिज्ञानस्यापरोक्षत्वं न स्यात् । मनस इन्द्रियत्वनिराकरणेन तत्तदिन्द्रिययोग्यताघटितलक्षणाभावात् । नच बाह्यप्रत्यक्षलक्षणमेवेदमिति वाच्यम् । अनुगतप्रयोजकाभावप्रसङ्गात्, सुखादेः प्रत्यक्षत्वोपपादनविरोधाच्च । प्रातिभासिकरजतांशप्रत्यक्षाव्याप्तेश्चेति चेत् । मैवम् । केवलसाक्षितत्तदिन्द्रियान्यतरयोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वस्य प्रयोजकत्वात् । सुखादेरिन्द्रियायोग्यत्वेऽपि केवलसाक्षियोग्यत्वान्नाव्याप्तिः । अतएव प्रातिभासिकरजतस्यापि केवलसाक्षिवेद्यत्वादपरोक्षत्वमिति रहस्यम् । एवंशब्दार्थमाह — **एकत्रे**ति । **जातित्वं न स्या**दिति । परस्परप्रतियोगिकात्यन्ताभावसमानाधिकरणयोर्जात्योरेकस्मिन्नर्थे वृत्तिः साङ्कर्यमिति साङ्कर्यरूपदोषप्रसङ्गादिति भावः । **अप्रामाणिकत्वा**दिति । नच साध्याविशेषः । प्रमाणागोचरत्वं प्रमाविषयत्ववदन्यत्वम्, अप्रामाणिकत्वं प्रमाविषयत्वाभाव इत्यन्योन्यात्यन्ताभावभेदेन भेदात् । यद्वा सकलप्रमाणजन्यप्रमाविषयतया तत्साधकप्रमाणाभावादिति न साध्याविशेष इति भावः । ननु मानाभावोऽसिद्धः, प्रत्यक्षादेरेव तत्र मानत्वादित्याशङ्क्य किमयं घट इत्यादिप्रत्यक्षं घटत्वादिजातौ मानम्, उत घटत्वं जातिः घटत्ववत्वादित्यनुमानम् । नाद्य इत्याह — **घटो-**

---

१. 'तौ तु स' इति मुद्रितपुस्तकपाठः.

**मानं, नतु तस्य जातित्वेऽपि । जातित्वरूपसाध्याप्रसिद्धौ तत्साध्यकानुमानस्याप्यनवकाशात् । समवायासिद्ध्या ब्रह्मभिन्ननिखिलप्रपञ्चस्यानित्यतया च नित्यत्वसमवेतत्वघटितजातित्वस्य घटत्वादावसिद्धेश्च । एवमेवोपाधित्वमपि निरसनीयम् । पर्वतो वह्निमानित्यादौ च पर्वतांशे वह्न्यंशे चान्तःकरणवृत्तिभेदाङ्गीकारेण तत्तद्वृत्त्यवच्छेदकभेदेन परोक्षत्वापरोक्षत्वयोरेकत्र चैतन्ये वृत्तौ न विरोधः । तथाच तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तद्वृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम् । घटादेर्विषयस्य प्रत्यक्षत्वं तु प्रमातृचैतन्याभिन्नत्वम् । ननु (कथं) घटादेरन्तःकरणावच्छिन्नचैतन्यादभेदः, अहमिमं पश्यामीति भेदानुभवविरोधादिति चेत् । उच्यते । प्रमात्रभेदो नाम न तावदैक्यं, किन्तु प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः ।**

---

**ऽयमिति** । द्वितीयं दूषयति—**जातित्वेति** । न केवलं जातौ प्रमाणाभावः, किन्तु तल्लक्षणमपि न सम्भवतीत्याह—**समवायेति** । रूपादिविशिष्टबुद्धिपक्षकसम्बन्धविषयकानुमानस्य स्वरूपसम्बन्धमादाय पर्यवसानात् । अन्यथाभावादिबुद्धावपि समवायस्य विषयतापत्तेरिति भावः । **अनित्यतयेति** । 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभिसंविशन्ती'त्यादिश्रुत्या ब्रह्मभिन्ननिखिलप्रपञ्चस्यानित्यत्वावगमादिति भावः । न केवलं तज्जातित्वनिराकरणे रतिः, किन्तूपाधित्वनिराकरणेऽपीत्याह । **एवमेवेति** । प्रमाणादेरभावादिति भावः । ननु मा भूदुक्तन्यायेनापरोक्षत्वादेर्जातित्वमुपाधित्वं वा । तथापि कथं विरुद्धयोर्धर्मयोरेकत्रवृत्तित्वमित्याशङ्क्य संयोगतदभावयोरिवावच्छेदकभेदेनाविरोधमाह— **पर्वत** इति । उक्तलक्षणं शिष्यसौकर्यार्थं संग्रहेण दर्शयति— **तथाचेति** । (वृ ? **तत्तद्वृ)त्त्यवच्छिन्नेति** । तत्तदाकारवृत्त्यवच्छिन्नेत्यर्थः । द्वितीयविकल्पस्योत्तरमाह— **घटादेरिति** । **प्रमात्रेति** । अन्तःकरणावच्छिन्नचैतन्याभिन्नत्वमित्यर्थः । अनुभवविरोधादित्युपलक्षणं, विज्ञानाभिन्नत्वं विषयस्यापरोक्षत्वमिति विज्ञानवादिनोक्तत्वात् तन्मतप्रवेशापत्तिश्चेत्यपि बोध्यम् । ननु सन् घट इति प्रतीयमानसत्ता घटादिसत्तैवास्तु न ब्रह्मसत्ता, मानाभावादित्याशङ्क्य किं प्रतीयमानसत्ता घटादिस्वरूपम्, उत पराभि-

---

१. 'त्वम् । द्वितीये घटादेः' इति मुद्रितपुस्तकपाठः ।

**तथाच घटादेः स्वावच्छिन्नचैतन्येऽध्यस्ततया विषयचैतन्यसत्तैव घटादिसत्ता। अधिष्ठानसत्तातिरिक्ताया आरोपितसत्ताया अनङ्गीकारात्। विषयचैतन्यं च पूर्वोक्तप्रकारेण प्रमातृचैतन्यमेवेति प्रमातृचैतन्यस्यैव घटाद्यधिष्ठानतया प्रमातृसत्तैव घटादिसत्ता नान्येति सिद्धं घटादेरपरोक्षत्वम्। अनुमित्यादिस्थले तु अन्तःकरणस्य वह्न्यादिदेशे निर्गमनाभावेन वह्न्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्यानात्मकतया वह्न्यादिसत्ता प्रमातृसत्तातो भिन्नेति नातिव्याप्तिः। नन्वेवमपि धर्माधर्मादिगोचरानुमित्यादिस्थले धर्माधर्मयोः प्रत्यक्षत्वापत्तिः। धर्माद्यवच्छिन्न-**

---

मतसत्ताजातिः। नाद्य इत्याह— **तथाचेति**। तथाच सन् घट इत्यत्र चैतन्यसत्तैव भासते न स्वरूपसत्ता। तथा सति घटो घट इतिवत् सन् घट इत्यनुभवायोगात्। अनुगतसद्बुद्धेरननुगतस्वरूपसत्ताविषयत्वाच्चेति भावः। द्वितीयं दूषयति— **अधिष्ठानेति**। अनुभवस्य सद्रूपात्मविषयत्वेनाप्युपपत्तावतिरिक्तसत्ताकल्पने गौरवान्मानाभावाच्चेति भावः। **आरोपितेति**। आरोपितस्य घटादेः सत्तेत्यर्थः। यद्वारोपिता चासौ सत्ता चेति तथोक्ता। परकल्पितसत्ताया जातेरनङ्गीकारादित्यर्थः। ननु घटादेः स्वावच्छिन्नचैतन्यसत्तातिरिक्तसत्ताकत्वाभावेऽपि कथं प्रमातृसत्तातिरिक्तसत्ताकत्वाभावसिद्धिः। घटान्तःकरणयोर्भिन्नदेशस्थत्वादित्यत आह— **विषयचैतन्यं चेति**। वृत्तिनिर्गमद्वारेण तदुभयावच्छिन्नचैतन्यस्यैकत्वात् तत्सिद्धिरिति भावः। अत्र संवेदनेषु विषयाकारप्रतिबिम्बावभासस्तथाविधबिम्बसन्निधानपुरःसरः प्रतिबिम्बत्वाद् दर्पणे मुखप्रतिबिम्बवदिति सौत्रान्तिकमतानुसारेण विषयस्य परोक्षत्वमेवास्त्विति शङ्कामुपसंहारव्याजेन निराकरोति — **इतीति**। उक्तलिङ्गाद्यप्रतिसन्धानेऽपि घटमहं जानामीत्यनुभवदर्शनादिति भावः। ननु पर्वतभानार्थमन्तःकरणवृत्तिनिर्गमनाङ्गीकारेण तद्गतवह्न्यादेः प्रत्यक्षत्वं स्यादित्यत आह— **अनुमित्यादिस्थल इति। निर्गमनाभावेनेति**। असन्निकर्षादिति भावः। उक्तलक्षणस्यानुमितिविषयधर्मादावतिव्याप्तिं शङ्कते— **नन्वेवमपीति**। उक्तसत्ताशून्यत्वस्य लक्षणत्वेऽपीत्यर्थः। **धर्माधर्मेति**। स्ववृत्तीति शेषः। स्ववृत्त्यतीतसुखानुमितिसमये सुखस्यापि प्रत्यक्षत्वापत्तिरिति शङ्कां निराकर्तुं वर्तमानत्वमपि विषयविशेषणं देयमिति सूचयितुं योग्यत्वस्यापीत्यपिशब्दः। सुरभि चन्दनमिति

**चैतन्यस्य प्रमातृचैतन्याभिन्नतया धर्मादिसत्तायाः प्रमातृसत्तानतिरेकादिति चेत् । न । योग्यत्वस्यापि विषयविशेषणत्वात् । नन्वेवमपि रूपी घट इति प्रत्यक्षस्थले घटगतपरिमाणादेः प्रत्यक्षत्वापत्तिः । रूपावच्छिन्नचैतन्यस्य परिमाणावच्छिन्नचैतन्यस्य चैकतया रूपावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदे परिमाणावच्छिन्नचैतन्यस्यापि प्रमात्रभिन्नतया परिमाणसत्तायाः प्रमातृसत्तातिरिक्तत्वाभावादिति चेत् । न । तत्तदाकारवृत्त्युपहितत्वस्यापि प्रमातृविशेषणत्वात् । रूपाकारवृत्तिदशायां परिमाणाकारवृत्त्यभावेन परिमाणाकारवृत्त्युपहितप्रमातृचैतन्याभिन्नसत्ताकत्वाभावेनातिव्याप्त्यभावात् ।**

**नन्वेवं वृत्तावव्याप्तिः । अनवस्थाभिया वृत्तिगोचरवृत्त्यनङ्गीकारेण तत्र स्वाकारवृत्त्युपहितत्वघटितोक्तलक्षणाभावादिति चेत् । न । अनवस्थाभिया वृत्तेर्वृत्त्यन्तराविषयत्वेऽपि स्वविषयत्वाभ्युपगमेन स्ववि-**

---

चाक्षुषविज्ञानसमये सौरभस्य घ्राणप्रत्यक्षत्वं स्यात्, स्मरणरूपसौरभाकारवृत्त्युपहितप्रमात्रभिन्नत्वादिति शङ्कानिवृत्त्यर्थमनुभवरूपत्वं तत्तदाकारवृत्तेर्विशेषणमिति सूचयितुं तत्तदाकारवृत्त्युपहितत्वस्यापीत्यपिशब्दः ।

**स्वविषयत्वाभ्युपगमेनेति** । ननु चक्षुरादिजन्यवृत्तिज्ञानं न स्वविषयकं कार्यत्वाद् रूपवत् । विपक्षे च जानामीति तस्य ज्ञानान्तरविषयत्वानुभवायोगप्रसङ्गस्य बाधकत्वात् । किञ्च घटा इति प्रत्यक्षं नैतज्ज्ञानविषयं तज्ज्ञानजनकेन्द्रियसन्निकर्षानाश्रयत्वात् सम्मतवत् । नचाप्रयोजकः । प्रत्यक्षविषयत्वे तज्जनकसन्निकर्षाश्रयत्वस्यैव प्रयोजकत्वात् । अन्यथातिप्रसङ्गात् । तस्मान्न वृत्तेः स्वविषयत्वमिति चेत् । तदपेशलम् । स्वरूपज्ञानस्य सन्निकर्षानाश्रयत्वेऽपि स्वविषयत्वाभ्युपगमेन व्यभिचारात् । नच जन्यज्ञानेऽयं नियमः । अप्रयोजकत्वात् । ज्ञानभिन्नत्वस्योपाधित्वाच्च । विमतं स्वविषयकं ज्ञानत्वात् स्वरूपज्ञानवत् इति प्रतिपक्षसम्भवाच्च । नच वृत्तेर्ज्ञेयत्वे क्रियाकर्मत्वयोर्विरोध इति वाच्यम् । अवच्छेदकभेदेन विरोधाभावात् । वृत्त्यन्तरविषयत्वेऽनवस्थाप्रसङ्गस्योक्तत्वाच्च । ततश्च वृत्तेः स्वविषयत्वमकामेनापि स्वीकरणीयमिति । नन्वेवमप्यहङ्कारतद्धर्मेष्वव्याप्तमिदं लक्षणं, तदाकारवृत्तेरभावात् । किमहमाकारवृत्तिः सम्बन्धार्था; उतावरणाभावार्था । नाद्यः, तेषां साक्षात् साक्षिण्यध्यस्तत्वेन

**षयवृत्त्युपहितप्रमातृचैतन्याभिन्नसत्ताकत्वस्य तत्रापि भावात् । एव- ञ्चान्तःकरणतद्धर्मादीनां केवलसाक्षिविषयत्वेऽपि तत्तदाकारवृत्त्यभ्यु- पगमेनोक्तलक्षणस्य तत्रापि सत्त्वान्नाव्याप्तिः । नचान्तःकरणतद्ध- र्मादीनां वृत्तिविषयत्वाभ्युपगमे केवलसाक्षिविषयत्वाभ्युपगमविरोध इति वाच्यम् । नहि वृत्तिं विना साक्षिविषयत्वं केवलसाक्षिवेद्यत्वम् । किन्तु इन्द्रियानुमानादिप्रमाणव्यापारमन्तरेण साक्षिविषयत्वम् । अत एवाहङ्कारटीकायामाचार्यैरहमाकारान्तःकरणवृत्तिरङ्गीकृता । अतएव (च) प्रातिभासिकरजतस्थले रजताकाराविद्यावृत्तिः साम्प्रदायिकैरङ्गी-**

---

नित्यसम्बन्धसत्त्वात् । न द्वितीयः, तदावरणाज्ञानादेरनङ्गीकारादित्याश- ङ्क्याह — **एवञ्चेति** । तथाच तेषां प्रत्यक्षत्वसिद्धये तदाकारवृत्तिरवश्यं स्वीकरणीयेति भावः । **तत्तदाकारेति** । नन्वन्तःकरणधर्मस्य सुखादेः स्वप्र- काशत्वेन वृत्तिवेद्यत्वानुपपत्तिः । तथाहि — सुखादयः स्वप्रकाशाः, स्वस- त्तायां प्रकाशाव्यभिचारात् संवेदनवत् इति चेन्न । बहूनां प्रकाश(त्व)क- ल्पनाद् वरमेकस्यैवात्मनः प्रकाशरूपत्वकल्पनमिति कल्पनायां लाघवमिति तथैव कल्पनात्, प्रकाशात्माध्यासात् सुखादिप्रकाशसम्भवेनाप्रयोजकत्वाच्च, सुखादेः स्वप्रकाशत्वेऽप्यात्मवद् वृत्तिवेद्यत्वे विरोधाभावाच्चेति भावः । ननु सुखादीनां वृत्तिवेद्यत्वाभ्युपगमे 'आत्मचैतन्येनाव्यवधानात् तत्प्रातिभासो- पपत्तेरि'ति विवरणविरोधः । 'सुखाद्याकारान्तःकरणपरिणामव्यवधानमन्तरे- णात्मा स्वाध्यस्तं सुखादिकं साधयती'ति तद्व्याख्यानविरोधश्च । तथाचाप- सिद्धान्त इत्याशङ्क्य निराकरोति — **नचेति** । अत्र किं वृत्तिं विना तद्वि- षयत्वं कैवल्यशब्दार्थः, उत प्रमाणव्यापारमन्तरेण तद्विषयत्वम् । नाद्य इत्याह — **नहीति** । अहङ्कारादिबोधसाक्षिचैतन्यस्य नित्यतया नाशाभावेन तज्जन्यसंस्काराभावेनाहङ्कारादिस्मरणानुपपत्तेः अहङ्कारादिगोचरवृत्तिरवश्यं स्वी- करणीयेति भावः । द्वितीये मदिष्टसिद्धिरित्याह — **किन्त्विति** । तथाच विवरणादिग्रन्थस्त्वभ्युपगमवादाभिप्रायेण । इन्द्रियव्यापारजन्यान्तःकरणपरि- णामव्यवधानमन्तरेणेत्येतदभिप्रायेण वा योजनीय इति भावः । अहङ्कारवृत्त्य- ङ्गीकारेऽहङ्कारग्रन्थीयविवरणाचार्यवचनं प्रमाणयति — **अतएवेति** । 'अह- ङ्कारवृत्त्यवच्छिन्नमेवान्तःकरणं चैतन्यस्य' विषयभावमापद्यत' इत्यादिनेत्यर्थः ।

कृता । तथाचान्तःकरणतद्धर्मादिषु केवलसाक्षिवेद्येषु वृत्त्युपहितत्व-घटितलक्षणस्य नाव्याप्तिः । तदयं निर्गलितार्थः — स्वाकारवृत्त्युप-हितप्रमातृचैतन्यसत्ताविरिक्तसत्ताकत्वशून्यत्वे सति योग्यत्वं विषयस्य प्रत्यक्षत्वम् । तत्र संयोगसंयुक्ततादात्म्यादीनां सन्निकर्षाणां चैतन्या-भिव्यञ्जकवृत्तिजनने विनियोगः ।

सा च वृत्तिश्चतुर्विधा संशयो निश्चयो गर्वः स्मरणमिति । एवं वृत्तिभेदेनैकमप्यन्तःकरणं मन इति बुद्धिरिति अहङ्कार इति चित्तमिति चाख्यायते । तदुक्तं —

"मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम् ।
संशयो निश्चयो गर्वः स्मरणं विषया इमे ॥"

इति ।

तच्च प्रत्यक्षं द्विविधं सविकल्पकनिर्विकल्पकभेदात् । तत्र सवि-

---

नन्वेवमपि प्रातिभासिकरजतेऽव्याप्तिः । तस्य केवलसाक्षिवेद्यत्वेन तदाकार-वृत्तेरभावादित्याशङ्कयोक्तयुक्तितौल्यात् तत्रापि (तदा ? सा)श्रयणीयेत्यभिप्रेत्य तत्र सम्प्रदायवचनं प्रमाणयति — **अतएवचेति** । तत्राप्यविद्या रजतज्ञाना-भासाकारेण परिणमत इत्युक्तत्वादिति भावः । केवलसाक्षिवेद्यत्वसमर्थन-फलमाह — **तथाचेति** । विदुषां कण्ठभूषणार्थमुक्तलक्षणं सङ्क्षेपेण दर्श-यति — **तदयमिति** । निष्कृष्टार्थ इत्यर्थः । नन्विन्द्रियजन्यं प्रत्यक्षमिति वक्ष्यमाणं न सम्भवति, इन्द्रियस्यार्थेन सम्बन्धाभावादित्याशङ्क्याह — **त-त्रेति** । विषयेषु सन्निकर्षाणां सत्त्वादिति शेषः । उक्तानां विनियोगमाह — **चै-तन्येति** । यद्वा वृत्तिप्रतिफलितचैतन्यरूपज्ञानस्य नित्यतयान्वयव्यतिरेकसिद्धे-न्द्रियसन्निकर्षादेस्तत्रोपयोगासम्भवेन वैयर्थ्यं स्यादित्यत आह — **तत्रेति** । प्रत्यक्षप्रमाकरणं प्रत्यक्षप्रमाणमिति निरूपिते सतीत्यर्थः ।

प्रसङ्गादन्तःकरणभेदं प्रतिपादयितुं वृत्तिभेदं दर्शयति — **सा चेति** । उक्तार्थेऽभियुक्तसम्मतिमाह — **तदुक्तमिति** ।

प्रत्यक्षप्रमां विभजते — **तच्चेति** । केन प्रकारेण द्वैविध्यमित्यत आह — **सविकल्पकेति** । सर्वव्यवहारहेतुत्वात् सविकल्पकस्य प्रथममु-द्देशः, अनन्तरं निर्विकल्पकस्येति भावः । प्रथमोद्दिष्टस्य सविकल्पकस्य स्वरूपमाह — **तत्रेति** । तयोर्मध्य इत्यर्थः । निर्विकल्पकज्ञानं व्यावर्त-

कल्पकं वैशिष्ट्यावगाहि ज्ञानम् । यथा घटं जानामीत्यादिज्ञानम् । निर्विकल्पकं तु संसर्गानवगाहि ज्ञानम् । यथा सोऽयं देवदत्तः, तत्त्वमसीत्यादिवाक्यजन्यं ज्ञानम् । ननु शाब्दमिदं ज्ञानं न प्रत्यक्षम् इन्द्रियाजन्यत्वादिति चेत् । न । नहीन्द्रियजन्यत्वं प्रत्यक्षत्वे तन्त्रं, दूषितत्वात् । किन्तु प्रमाणचैतन्यस्य योग्यवर्तमानविषयचैतन्याभिन्नत्वमित्युक्तम् । तथाच सोऽयं देवदत्त इत्यादिवाक्यजन्यज्ञानस्य सन्निकृष्टविषयतया बहिर्निःसृतान्तःकरणवृत्त्यभ्युपगमेन देवदत्तावच्छिन्नचैतन्याद् वृत्त्यवच्छिन्नचैतन्यस्याभिन्नतया सोऽयं देवदत्त इति वाक्यजन्यज्ञानस्य प्रत्यक्षत्वम् । एवं तत्त्वमसीति वाक्यजन्यज्ञानस्यापि । तत्र प्रमातुरेव विषयतया तदुभयाभेदस्य स्पष्टत्वात् । ननु वाक्यजन्यज्ञानस्य पदार्थसंसर्गावगाहितया कथं निर्विकल्पकत्वम् । उच्यते । वाक्यजन्यज्ञानविषयत्वे हि न पदार्थसंसर्गत्वं तन्त्रम् । अनभिमतसंसर्गस्यापि वाक्यगम्यतापत्तेः । किन्तु तात्पर्यविषयत्वम् । प्रकृते च 'सदेव सोम्येदमग्र आसीदि'त्युपक्रम्य 'तत् सत्यं स आत्मा तत् त्वमसि श्वेतकेतो' इत्युपसंहारेण विशुद्धे ब्रह्मणि वेदान्तानां तात्पर्यमवसितमिति कथं तात्पर्याविषयं संसर्गं बोधयेत् । इदमेव 'तत्त्व-

---

यति — **वैशिष्ट्येति** । निर्विकल्पकस्य स्वरूपमाह— **निर्विकल्पकं त्विति** । उदाहरति — **यथेति** । ननु तत्त्वमस्यादिवाक्यं नापरोक्षज्ञानजनकं वाक्यत्वाद् दर्शादिवाक्यवत् । नचाप्रयोजकत्वम्, इन्द्रियाणामेवापरोक्षज्ञानजनकत्वादिति चोदयति —**ननु शाब्दमिति** । अप्रयोजकत्वादित्यत आह — **नेति** । **दूषितत्वादिति** । सुखादीनां प्रत्यक्षत्वाभावप्रसङ्गादिति भावः । किं तर्हि प्रयोजकमिति पृच्छति **किन्त्विति** । उत्तरमाह — **योग्येति** । सोऽयं देवदत्त इति वाक्यजन्यज्ञानस्य प्रत्यक्षत्वमुपपादयति — **तथाचेति** । तत्त्वमसीति वाक्यजन्यज्ञानेऽपि तद् दर्शयति — **एवमिति** । ननु घटमानयेत्यादिवाक्ये पदोपस्थापितपदार्थसंसर्गस्यैव वाक्यार्थतया दृष्टत्वेन प्रकृतेऽपि तस्य संसर्गगोचरत्वे कथं निर्विकल्पकत्वमिति चोदयति — **नन्विति** । **अनभिमतेति** । गामानय शुक्लां दण्डेनेत्यत्र गोकरणकदण्डकर्मकानयनसंसर्गस्य प्रसिद्धिप्रसङ्गादिति भावः । ननु तत्त्वमस्यादिवाक्यस्यापि पदार्थसंसर्गपरत्वमस्ती-

**मस्या'दिवाक्यानामखण्डार्थत्वं यत् संसर्गानवगाहियथार्थज्ञानजनक-त्वम् । तदुक्तं—**

**"संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् ।**
**उक्ताखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ॥"**

**प्रातिपदिकार्थमात्रपरत्वं वाखण्डार्थत्वमिति चतुर्थपादार्थः ।**

---

त्यत आह — **प्रकृते** चेति । प्रसङ्गादखण्डार्थत्वं निर्वक्ति—**इदमेवेति** । इदं-शब्दार्थमाह — **यदिति** । ननु घटमानयेतिवाक्यस्यापि पदार्थसंसर्गयथार्थ-ज्ञानजनकतयाखण्डार्थत्वं स्यादित्यत आह — **संसर्गानवगाहीति** । ननु तत्त्वमस्यादिवाक्यमपि कर्तृत्वसर्वज्ञत्वादिविशिष्टतत्त्वम्पदार्थसंसर्गभ्रान्तिजनक-मेवेत्यसम्भव इत्यत आह — **यथार्थेति** । नन्वत्र यत्किञ्चित्संसर्गागोचरत्वं वा प्रकृतपदस्मारितपदार्थसंसर्गागोचरत्वं वा । नाद्यः । घटमानयेत्यादिवाक्यस्यापि यत्किञ्चित्संसर्गागोचरज्ञानजनकतयातिव्याप्तेः । न द्वितीयः । विषं भुङ्क्ष्वे-त्यादिवाक्यस्य प्रकृतपदस्मारितविषभोजनरूपपदार्थसंसर्गबोधकतया तत्राप्यति-प्रसङ्गादिति चेत् मैवम् । द्वितीयपक्षस्यैवाश्रयणात् । तत्रापि लक्षणया प्रकृत-पदस्मारितपदार्थसंसर्गगोचरप्रमितिजनकत्वान्नातिप्रसङ्ग इति । उक्तार्थे चित्सुखा-चार्यसम्मतिमाह — **तदुक्तमिति** । गिरामपर्यायशब्दानां संसर्गागोचरत्वे सति (या) यथार्थधीहेतुतेयमखण्डार्थतेत्युक्ता । अथवा तेषामेव शब्दानां तत्प्राति-पदिकार्थता तदेति श्लोकार्थः । घटः कुम्भ इत्यादावतिप्रसक्तिवारणायापर्यायग्रह-णम् । गामानयेत्यादिव्यवच्छेदार्थं संसर्गागोचरग्रहणम् । वाक्यमात्रस्याखण्डार्थत्वे (प्रति ? प्रातिपदिक)ग्रहणम् । नन्वत्र प्रातिपदिकार्थतायाः अर्थनिष्ठत्वेन कथं तत्त्वमादिवाक्यस्य तत्त्वम् । किञ्च घटमानयेति वाक्यस्य संसर्गप्रातिपदिकत्वेऽपि प्रातिपदिकार्थप्रतिपादकत्वमस्त्येवेति तत्रातिव्याप्तिरित्याशङ्कयाह — **प्रातिपदि-केति** । द्वितीयलक्षणवाक्यापेक्षितमनुषङ्गेण दर्शयति — **अखण्डेति** । नन्वस्त्वेवं लक्षणं, तथापि लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरिति न्यायेन प्रमाणाभावात् कथमखण्डार्थत्वसिद्धिरिति चेत् । उच्यते । तत्त्वमस्यादिवाक्यमखण्डार्थनिष्ठम्, अन्योन्यकार्यकारणभावरहितद्रव्यविषयसमानाधिकरणवाक्यत्वात् सोऽयं देवदत्त इति वाक्यवत् । वाक्यत्वादित्युक्ते राज्ञः पुरुष इत्यादिवाक्ये व्यभिचारः । तद्वार-णाय समानाधिकरणेति । तावत्युक्ते नीलो घट इत्यत्र व्यभिचारः, अत उक्तं द्रव्येति । उभयोरपि द्रव्यत्वाभावादिति भावः । न(चै ? न्वे)वं मृद्घट इत्यत्र

**तच्च प्रत्यक्षं पुनर्द्विविधं जीवसाक्षीश्वरसाक्षि चेति । तत्र जीवो नामान्तःकरणावच्छिन्नचैतन्यम् । तत्साक्षि त्वन्तःकरणोपहितचैतन्यम् । अन्तःकरणस्य विशेषणत्वोपाधित्वाभ्यामनयोर्भेदः । विशेषणं**

---

व्यभिचार इत्यत आह — अन्योन्यकार्यकारणेति । ननु सिद्धान्ते ब्रह्मभेद-देवदत्तभेदयोरभावेनासिद्धिसाधनवैयर्थ्यापत्तिरिति चेन्न । वाक्यैकदेशपदद्वय-प्रतिपाद्यतया द्वित्वसम्भवाद् विशिष्टयोर्भिन्नत्वात् । नच तत्त्वमस्यादिवाक्यं नाखण्डार्थं वाक्यत्वाद् ज्योतिष्टोमादिवाक्यवदिति प्रत्यनुमानपराहतं त्वदनुमान-मिति वाच्यम् । अप्रयोजकत्वात् । सोऽयं देवदत्त इति वाक्ये व्यभिचाराच्च । ननु तत्राप्यखण्डार्थत्वमसिद्धमिति चेन्न । तदेतत्पदद्वयलक्षितदेवदत्तैक्यस्य तेन प्रतिपादनात् । तथाहि — तद्देशकालविशिष्टैतद्देशकालविशिष्टयोर्न वाक्येनैक्यं प्रतिपाद्यते । तथा सति एतद्देशकाले तद्देशकालत्वप्रसङ्गात् । अन्यथा इदानीं तद्देशकालवैशिष्ट्यानुपपत्तेः । तस्मादुभयोपलक्षिताभेद एव प्रतिपाद्यत इति सोऽयमित्यादिवाक्यस्याखण्डार्थसिद्धिरिति सर्वं समञ्जसमित्यलमतिप्रसङ्गेन ।

प्रकारान्तरेण प्रत्यक्षप्रमाणं विभजते — **तच्चेति** । द्वैविध्यमेवाह — **जीवेति** । जीवस्वरूपापरिज्ञाने तत्साक्षिस्वरूपं दुर्विज्ञेयमिति जीवस्वरूपं निरूपणीयम् । तत्र जीवो नाम न तावत् स्थूलशरीरावच्छिन्नः । स्थूल-शरीरस्य सादित्वेनानादिजीवावच्छेदकत्वायोगात् । जीवस्य सादित्वे कृतहा-नाकृताभ्यागमप्रसङ्गात् । नाप्यन्तःकरणावच्छिन्नः । तस्यापि कार्यत्वेनोपा-धित्वायोगात् । अन्तःकरणस्य सुषुप्तिप्रलययोरभावाच्चेत्याशयेनाक्षिपति । तत्र तयोर्मध्य इत्यर्थः । उत्तरमाह — **अन्तःकरणेति** । 'कार्योपाधिरयं जीवः' इति श्रुत्याहमित्यनुभवविषयत्वाच्च अन्तःकरणमेवावच्छेदकम् । नच सुषुप्त्यादौ तदभावः । तत्रापि तस्य सूक्ष्मतया सत्त्वात् । नचैवं साद्यन्तःकरणं कथ-मनाद्यवच्छेदकमिति वाच्यम् । अन्तःकरणप्रवाहस्यानादित्वादिति भावः । वस्तुतोऽन्तःकरणतत्संस्कारान्यतरावच्छिन्नो जीव इति रहस्यम् । जीवसाक्षि-स्वरूपमाह — **तदिति** । नन्वन्तःकरणस्योभयत्रावच्छेदकत्वाविशेषात् कथं जीवसाक्षिणोर्भेद इत्यत आह — **अन्तःकरणस्येति** । उपाधिविशेषणयोर्भेदं दर्शयति— **विशेषणं चेति** । (ननु ?) यद्यपि कार्यानन्वयेऽपि स्वप्रत्याय्यव्यावृ-त्त्यधिकरणतावच्छेदकतामात्रेण स्वर्गादेः कामनाविशेषणत्वं दृष्टं, तथापि तत्र

**च कार्यान्वयि व्यावर्तकम् । उपाधिस्तु कार्यानन्वयी व्यावर्तको वर्तमानश्च । रूपविशिष्टो घटोऽनित्य इत्यत्र रूपं विशेषणम् । कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यत्र कर्णशष्कुली उपाधिः । अयमेवोपाधिर्नैयायिकैः परिचायक इत्युच्यते । प्रकृते चान्तःकरणस्य जडतया विषयावभासकत्वायोगेन विषयावभासकचैतन्यस्योपाधित्वम् । अयं च जीवसाक्षी प्रत्यात्मं नाना । एकत्वे मैत्रावगते चैत्रस्याप्यनुसन्धानप्रसङ्गः । ईश्वरसाक्षि तु मायोपहितं चैतन्यम् ।**

---

स्वर्गो न विशेषणं किन्तु परिचायक इत्यत्र तात्पर्यम् । ननु प्रकृतेऽनुमानस्यानुक्ततयान्तःकरणस्योपाधित्वमसङ्गतमित्यत आह — **उपाधिश्चेति** । उपलक्षणं व्यावर्तयति — **वर्तमान** इति । प्रमेयत्वादिकं (व्यावर्तयति —) **व्यावर्तक** इति । विशेषणं व्यावर्तयति— **कार्यानन्वयीति** । विशेषणमुदाहरति —**रूपविशिष्ट** इति । उपाधिमप्युदाहरणनिष्ठतया प्रदर्शयति — **कर्णशष्कुलीति**। ननु कर्णशष्कुल्याः परिचायकत्वमेव तार्किकैरभिहितमिति कथङ्कारमत्रोपाधित्वमभिधीयत इत्यत आह— **अयमिति** । नन्वन्तःकरणस्यैव विषयावभासकत्वमस्तु, किं तत्प्रतिफलितचैतन्यस्य तद्भासकत्वं कल्पयित्वा तस्योपाधित्ववर्णनेनेत्यत आह — **प्रकृते चेति** । एकजीवपक्षं प्रतिक्षिपति — **अयं चेति** । **प्रत्यात्ममिति** । प्रतिशरीरमित्यर्थः । **अनुसन्धानप्रसङ्ग** इति । चैत्रस्य मैत्रकर्मफलभोक्तृत्वप्रसङ्ग इत्यपि द्रष्टव्यम् । **मायोपहितमिति** । 'मायिनं तु महेश्वरमि'त्यादिश्रुतेरिति भावः । अत्र मायाशब्देन भावरूपाज्ञानमेवोच्यते । नन्वज्ञानसद्भावे प्रमाणाभावात् कथं तदुपहितचैतन्यस्य साक्षित्वमिति चेत् । उच्यते । अहमज्ञ इत्यादि प्रत्यक्षं तावद् भावरूपाज्ञाने मानम् । नच ज्ञानाभावविषय एवायमनुभव इति वाच्यम् । क इत्थं ब्रूयात् प्राभाकरमतावलम्बी भट्टमतावलम्बी वा न्यायमतावलम्बी वा । नाद्यः ।

"भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात् ।"

इति वदता भावव्यतिरिक्तस्याभावस्यानभ्युपगमात् । न द्वितीयः । अभावस्य षष्ठप्रमाणगोचरत्वेन ज्ञानस्य नित्यानुमेयत्वेन च तदभावस्य प्रत्यक्षविषयत्वानुपपत्तेः । न तृतीयः । प्रतियोगिज्ञानाज्ञानाभ्यां ज्ञानाभावज्ञानायोगात् । पटं न जानामीत्यनुभवोऽपि तत्र मानम् । ननु भावरूपाज्ञानविषयस्याज्ञाने अज्ञाना-

ज्ञानायोगात् ज्ञाने चाज्ञानस्यैवाभावात् कथं भावरूपाज्ञानमिति चेन्न । अज्ञानावच्छेदकस्य विषयस्य ज्ञानं साक्षिरूपमिति न तद् भावरूपाज्ञानविरोधि, वृत्तेरेव तद्विरोधित्वात् । अज्ञानस्यैकत्वेन ब्रह्मसाक्षात्कारैकनिवर्त्यत्वेन च तस्य नानाशक्तिकल्पनया शक्तेरेव ज्ञानविरोधित्वाच्च । किञ्च अनुमानमपि तत्र मानम् । तथाहि — संशयविपर्यासान्यतरविषयविषयकप्रत्यक्षज्ञानं स्वविषयचैतन्यावरणपूर्वकं, संशयविपर्यासान्यतरविषयविषयकत्वे सति संशयविपर्याससनिवृत्तौ निरपेक्षकारणत्वाद्, अन्धकारे घटादिसंशयनिवर्तकप्रदीपप्रभावत् । तत्र सुखादिसाक्षात्कारस्य केवलसाक्षिविषयत्वाङ्गीकारेण तत्र बाधवारणायोक्तं संशयविपर्यासान्यतरविष(यविष)यकेति । धर्मादिशाब्दज्ञानस्यापि पक्षत्वे तत्र बाधः स्यादित्यत उक्तं प्रत्यक्षेति । अन्धकारेणार्थान्तरवारणाय चैतन्यावरणेत्युक्तम् । सुखसाक्षात्कारे व्यञ्जकाभावप्रयुक्तसंशयाद्युत्तरघटादिप्रत्यक्षे च व्यभिचारवारणाय क्रमेण विशेषणद्वयम् । नच प्रागभावादिनार्थान्तरमिति वाच्यम् । प्रागभावस्याभावरूपत्वेन प्रतियोगिभेदेन नानात्वेन च गौरवात् । लाघवेनैकस्य भावरूपाज्ञानस्यैव कल्पनात् । अतएव समवायसाधकमीश्वरसाधकं चानुमानं लाघवादेकं समवायमेकमेवेश्वरं (च) साधयतीति तार्किकाणां सिद्धान्तः । (घटध्वंसखाजनकघटापरोक्षप्रमाणं ज्ञानं घटं न जानामीति ज्ञानविषयनिवर्तकं घटापरोक्षज्ञानवदित्यनुमानान्तरमपि मानम् । घटध्वंसे च प्रतियोगिसाक्षात्कारस्य हेतुत्वमन्वयादिनावगतम् । अस्मदाद्यप्रत्यक्षस्थलेऽपीश्वरसाक्षात्कारस्य सत्त्वेनाव्यभिचारात् ?।) किञ्च रजततदवभासयोर्मिथ्यात्वं सत्योपादानत्वेऽनुपपद्यमानं मिथ्याभूतमुपादानमनाद्येकमेव भावरूपाज्ञानं कल्पयतीत्यर्थापत्तिरज्ञाने प्रमाणम् । ब्रह्मणो जीवाभेदस्य वक्ष्यमाणतया अस्ति ब्रह्म प्रकाशते चेति व्यवहारानुकूलकारणे(न ?) सत्यपि नास्ति न प्रकाशते चेति विपरीतव्यवहारालम्बनयोग्यता स्वरूपावरणमन्तरेणानुपपद्यमानावरणं लाघवाद् भावरूपाज्ञानमेव कल्पयतीत्यर्थापत्त्यन्तरमपि मानम् । श्रुतिरपि भावरूपाज्ञाने मानम् । तथाहि — 'देवात्मशक्तिं स्वगुणैर्निगूढाम्', 'अनृतेन हि प्रत्यूढाः', 'अनीशया शोचति मुह्यमानः', 'त इमे सत्याः कामा अनृतापिधानाः', 'अविद्यायामन्तरे वर्तमानाः', 'नान्यच्छ्रेयो वेदयन्ते'

''अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।''

'नीहारेण प्रावृताः', 'मायां तु प्रकृतिं विद्यात्'

**तच्चैकं तदुपाधिमायाया एकत्वात् । 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिश्रुतौ मायाभिरिति बहुवचनस्य मायागतशक्तिविशेषाभिप्रायतया मायागतसत्त्वरजस्तमोरूपगुणाभिप्रायतया वोपपत्तेः ।**

---

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।"

इत्याद्याः श्रुतयो भावरूपाज्ञानमविद्यादिपदेन दर्शयन्त्यः कथमपह्नोतुं शक्या इति । तस्मात् सिद्धं मायापदवाच्यमनाद्यनिर्वचनीयं भावरूपाज्ञानम् । ननु मायाज्ञानयोर्न तु भेदः भगवच्छक्तिरूपत्वात् । दृश्यते हि

"तरत्यविद्यां विततां हृदि यस्मिन् निवेशिते ।"

इति श्रुतौ 'मायामेतां तरन्ति ते' इति भगवद्वचने तरन्तीति । तरणं च शक्तिविशेषे युज्यते नानिर्वचनीये । तस्माद् यत्र मायाशब्दप्रयोगस्तत्र शक्तिविशेषस्यैव मुख्यार्थत्वमिति चेन्न । विचित्रविषयगोपुरप्रासादनिर्मातरि तक्षादौ मायाशब्दाप्रयोगाद्, अविद्यमानार्थावभासक एव ऐन्द्रजालिकादौ तत्पदप्रयोगात् ।

"मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।"

इति मायाप्रतियोगित्वेन पारमार्थिकश्रवणात् तरत्यविद्यामित्यादिवाक्यं न तरणाभिप्रायं, 'विमुक्तश्च विमुच्यते' 'ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुत्या निवृत्तिमात्रस्यावगमात् । अन्यथा शक्तित्वं परिकल्प्य तत्तरणाङ्गीकारे शक्तेर्नित्यत्वेन तन्नाशायोगाद् मुक्तस्य पुनः संसारप्रसङ्गः । तस्मात् 'तरति ब्रह्महत्यामि'त्यादाविव निवृत्तिरेव तरणम् । किञ्च माया चाविद्यैव, 'तरत्यविद्यामि'त्यत्र मायाया अविद्यासामानाधिकरण्यश्रुतेः भेदकल्पनायां मानाभावाच्च । आवरणशक्तिप्राधान्ये अविद्येति विक्षेपशक्तिप्राधान्ये च मायेति व्यपदेशभेदोपपत्तिरिति न किञ्चिदनुपपन्नमित्यलमतिविस्तरेण ।

ननु मायाया एकत्वे 'इन्द्रो मायाभिरि'ति बहुवचनानुपपत्तिरित्यत्राह — इन्द्रो मायाभिरिति । इन्द्रः परमेश्वरः मायाभिः सत्त्वादिगुणविशेषैः पुरुरूपः घटादिप्रपञ्चरूप इति यावत् ईयते प्राप्यते इत्यर्थः । ननु मायाया एकत्वसाधकप्रमाणमन्तरेणानेकत्वप्रतिपादकश्रुतेरर्थान्तरे कल्पनानुप-

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।"

"तरत्यविद्यां विततां हृदि यस्मिन् निवेशिते ।
योगी मायाममेयाय तस्मै विद्यात्मने नमः ॥"

"अजामेकां लोहितशुक्लकृष्णां वह्वीं प्रजां जनयन्तीं सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥"

**इत्यादिश्रुतिष्वेकवचनबलेन लाघवानुगृहीतेन मायाया एकत्वं निश्चीयते । ततश्च तदुपहितं चैतन्यम् । तच्चेश्वरसाक्षि । तच्चानादि तदुपाधे-**

---

पत्तिरित्यत्राह — **मायां त्विति** । मायायाः प्रकृतित्वे मानमाह — **मायां त्विति** । **तरत्यविद्यामिति** । यस्मिन् परमात्मनि नित्यनैमित्तिककर्मप्रक्षालितपापमले चित्तेऽभिव्यक्ते सति योगी मायां तरति तस्मै नम इति सम्बन्धः । मायायास्तर्तव्यत्वे हेतुमाह — (विद्येति ।) विद्याविद्ययोर्निवर्त्यनिवर्तकभावप्रसिद्धेरिति भावः । सुषुप्त्यादावविद्याया अपुरुषार्थत्वादर्शनान्न तन्निवृत्तिरीप्सितेत्यत आह— **विततामिति** । कार्याकारेण विततामित्यर्थः । उपादाननिवृत्तौ कार्यस्यात्यन्तिकनिवृत्तेरविद्यानिवृत्तिरप्याकाङ्क्षितेति भावः । वेद्यत्वं व्यावर्तयति— **अमेयायेति** । तत्र हेतुः— **विद्यात्मन इति** । **अजामिति** । अजाम् अनुत्पन्नाम् । लोहितशुक्लकृष्णशब्दैः रजःसत्त्वतमांस्यभिधीयन्ते । लोहितं रजो रञ्जनात्मकत्वात् । शुक्लं सत्त्वं प्रकाशात्मकत्वात् । कृष्णं तम आवरणात्मकत्वात् । उक्तगुणविशिष्टामित्यर्थः । (सा च ?) वह्वीं प्रजां त्रैगुण्यान्विताम् अविद्यां विद्याविरोधिनीमजोऽजन्य एको जीवः जुषमाणः प्रीयमाणः सेवमानो वानुशेते सुखी दुःखी मूढोऽहमित्यविवेकितया संसरति । अन्यः पुनरजः पुरुषः उत्पन्नविवेकज्ञानो विरक्तो जहाति । एनां प्रकृतिं भुक्तभोगां कृतभोगापवर्गां परित्यजति मुच्यत इति श्रुत्यर्थः । नन्वजामेकामित्यादिश्रुतिगतमेकवचनमेकं वचनमितिवत् समुदायाभिप्रायकत्वेन व्याख्यायतां, किं बहुवचनबाधेनेति शङ्कां निराकर्तुं लाघवानुगृहीतेनेत्युक्तम् । उपसंहरति —**ततश्चेति** । **अनादीति** । सादित्वे जगत्कर्तृत्वाद्यनुपपत्तेरिति भावः । ननूपाधेः सादित्वात् तदुपहितसाक्ष्यपि सादीत्यत आह — **तादिति** । तदुक्तं —

**मायाया अनादित्वात् । मायावच्छिन्नचैतन्यं च परमेश्वरः । मायाया विशेषणत्वे ईश्वरत्वमुपाधित्वे साक्षित्वमिति ईश्वरत्वसाक्षित्वयोर्भेदः । नतु धर्मिणोरीश्वरतत्साक्षिणोः । स च परमेश्वर एकोऽपि स्वोपाधिभूतमायानिष्ठसत्त्वरजस्तमोगुणभेदेन ब्रह्मविष्णुमहेश्वरादिशब्दवाच्यतां**

---

"(जीवो ब्रह्म? जीव ईशो) विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥"

इति भावः । नन्वेकोपाध्यवच्छिन्नतया कथमीश्वरतत्साक्षिणोर्भेद उपपद्यते इत्याशङ्क्य नहि धर्मिणोर्भेदः, किन्तु धर्मयोरित्यभिप्रेत्य धर्मभेदनियामकमाह — **मायाया** इति । गोत्वाश्वत्वरूपधर्मभेदेन गवाश्वयोर्भेदवद् ईश्वरत्वतत्साक्षित्वभेदेनेश्वरतत्साक्षिणोरपि भेदः स्यादित्याशङ्क्य विरुद्धधर्मयोरेव भेदकत्वेन प्रकृते तदभावादित्याशयेनाह — नत्विति । भेदे मानाभावादिति भावः । ननु मायाया एकत्वेनेश्वरस्यापि तथात्वात् कथं ब्रह्मविष्णुमहेश्वरादिव्यवस्थेत्याशङ्क्याह— **स चेति** । **मायानिष्ठेति** । 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैः' इति भागवतोक्त्या मायायाः सत्त्वादिगुणवत्त्वावगमादिति भावः । ननु त्रिमूर्तीनां नाभेदः । अभेदे उपास्योपासकभावानुपपत्तेरिति चेन्न । तस्य लोकविश्वासार्थत्वात् ।

"जुषन् रजोगुणं तत्र स्वयं विश्वेश्वरो हरिः ।
ब्रह्मा भूत्वास्य जगतो विसृष्टौ सम्प्रवर्तते ॥
तमोद्रेकी च कल्पान्ते रुद्ररूपी जनार्दनः ।"

इत्यारभ्य

"सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवानेक एव जनार्दनः ॥"

इत्यादिना श्रीविष्णुपुराणे मूर्तीनामेकत्वप्रतिपादनपूर्वकमौपाधिकभेदप्रतिपादनात् ।

"गुणभेदं समास्थाय मूर्तित्रित्वमवाप्तवान् ।"

इति बृहन्नारदीयवचनाच्च ।

"स एव सर्गः स च सृज्यकर्ता स एव पात्यत्ति च पाल्यते च ।
ब्रह्माद्यवस्थाभिरशेषमूर्तिर्विष्णुर्वरिष्ठो वरदो वरेण्यः ॥"

इति विष्णुपुराणे साक्षादेवाभेदप्रतिपादनाच्च ।

"शक्तयो यस्य दैकस्य ब्रह्मविष्णुशिवात्मिकाः ।
भवन्त्यभूतपूर्वस्य तद् विष्णोः परमं पदम् ॥"

इति मार्कण्डेयपुराणवचनाच्च ।

"नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ।
एकः स भिद्यते भ्रान्त्या मायया न स्वभावतः ॥"

इति कौर्मवचनाच्च । अन्यान्यप्यभेदप्रतिपादकवचनानि विस्तरभयान्न लिख्यन्ते । एतेन मूर्त्यन्तरविद्वेषणेन मूर्त्यन्तरमवलम्बमानाः प्र........षु श्रौताग्निहोत्रादिकर्मणोऽपरिच्छिन्नपरिपूर्णविशुद्धब्रह्मणः परिच्छिन्नलोकशरीरादियोगं च सत्यं मन्वानाः स्वाभिमततर्काभासं वैदिकत्वविभ्रमाय व्याससूत्रेषु प्रवेशयन्तो विशुद्धज्ञानानन्दब्रह्माद्वैतं वैदिकमपि स्वगृह एव स्वापत्यशिष्यभार्यादिसन्निधौ दूषयन्तस्तार्किकाः शैवमाध्वबराकाः पराकृता वेदितव्याः । शैववैष्णवपुराणयोरुभयोरपि तुल्यवत्प्रामाण्यात् । नच विष्णुप्रतिपादकपुराणानां 'सहस्रशीर्षा पुरुषः'

"सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् ।
विश्वं नारायणं देवमक्षरं परमं प्रभुम् ॥"

"एको ह वै नारायण आसीन्न ब्रह्मा नच शङ्करः ।"

"नारायणं महाज्ञेयं विश्वात्मानं परायणम् ।"

इत्यादिश्रुतिवाक्यानां सत्त्वे तद्विरोधाच्छिवपुराणानां विरोधाधिकरणन्यायेनाप्रामाण्यमिति वाच्यम् । 'एको रुद्रो न द्वितीयाय तस्थे'

"यो देवानां प्रथमं पुरस्ताद् विश्वाधिको रुद्रो महर्षिः ।
हिरण्यगर्भं पश्यति जायमानं स नो देवः शुभया स्मृत्या संयुनक्तु ॥"

इत्युपक्रम्य 'यस्मात् परं नापरमस्ति किञ्चिदि'त्युपपाद्य 'वेदान्तविज्ञाने'त्यादिना शुद्धान्तःकरणैः पुरुषधौरेयैर्वेदान्तवाक्यजनितसाक्षात्कारैः प्रापणीय इति चाभिधाय

"तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ।"

इत्युपसंहारवा(क्यानां ? कथं:)

"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥"

"ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्"

"शिवो ध्येयः शिवङ्करः सर्वमन्यत् परित्यजेत् ।"

इत्यथर्वशिखावच(नस्य ? नेन)

"ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं शिवरूपाय वै नमः ॥"

इत्यादिश्रुतिभिश्च विष्णुपुराणानामेवाप्रामाण्यापत्तेः । नचोदाहृतवाक्येषु रुद्र-महेश्वरपशुपतिशिवादिशब्दानां योगवृत्त्या विष्णुपरत्वाद् विष्णुसहस्रनामग्रन्थे (विष्ण्वादि ? शिवादि)पदानां विष्णुनामपर्यायत्वोक्तेश्च विष्णुपरतैवेति न विरोध इति वाच्यम् । विष्णुनारायणादिशब्दानामपि योगवृत्त्या सदाशिवपरत्वात्, शिवसहस्रनामग्रन्थे विष्ण्वादिपदानां शिवनामपर्यायत्वकथनाच्च, नारायणाद्युप-निषदामपि शिवपरतैव स्यात् । अतएव शिवप्रतिपादकवाक्यानि शिवान्तर्यामि विष्णुपराणीति निरस्तम् । विष्णुप्रतिपादकवाक्यानामपि तदन्तर्यामिशिवपरत्वा-पत्तेः । ततो ब्रह्मविष्णुमहेश्वराणाममेदेनैव श्रुतीनां प्रामाण्यमुपेयम् । अतएव च भगवद्गीतायाम् —

"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।"

इति ।

"मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।"

इति जगदुत्पत्त्यादिहेतुत्वेन मुमुक्षुज्ञेयत्वेन च प्रतिपाद्यमानः स्वयमेव महेश्वरो-ऽपीति सूचयितुम्

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥"

इतीश्वरपदं प्रथमपुरुषपदं च प्रायुङ्क्त । प्रथमपुरुषपदप्रयोगादनीश्वरत्वं स्वस्य मा भूदित्याशयेन

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥"

इति चोवाच । नचोमालक्ष्मीपतित्वादिविरुद्धधर्माद् भेदः । सीतारुक्मिणीपति-त्वादिविरुद्धधर्माश्रयतया रामकृष्णादीनामपि भेदापत्तेः । यदि च सीतारुक्मि-ण्यादेर्देहभेदो न स्वरूपभेदः, तदोमालक्ष्म्यादेरपि तुल्यम् । मायोपहितचैतन्यस्य ब्रह्मविष्ण्वादिभेदव्यपदेशवच्चैतन्योपाहितमायाया एवोमासरस्वत्यादिव्यपदेशाभ्यु-पगमादभेदात् । तदेवं वस्तुतो निर्गुणमेव मायया सगुणं सर्वज्ञं सत्यसङ्कल्पं

भजते। नन्वीश्वरसाक्षिणो(रः)ऽनादित्वे 'तदैक्षत बहु स्यां प्रजायेये'-त्यादौ सृष्टिपूर्वसमये परमेश्वरस्यागन्तुकमीक्षणमुच्यमानं कथमुपपद्यते। यथा विषयेन्द्रियसन्निकर्षादिकारणवशेन जीवोपाध्यन्तःकरणस्य वृत्ति-भेदा जायन्ते, तथा सृज्यमानप्राणिकर्मवशेन परमेश्वरोपाधिभूतमायायां वृत्तिविशेषाः इदमिदानीं स्रष्टव्यमिदमिदानीं पालयितव्यमिदमिदानीं संहर्तव्यमित्याद्याकारा जायन्ते। तासां च वृत्तीनां सादित्वात् तत्प्रति-बिम्बितचैतन्यमपि सादीत्युच्यते।

एवं साक्षिद्वैविध्येन प्रत्यक्षज्ञानद्वैविध्यम्। प्रत्यक्षत्वं च ज्ञेयगतं ज्ञप्तिगतं च निरूपितम्। तत्र ज्ञप्तिगतप्रत्यक्षत्वस्य सामान्यलक्षणं चि-त्त्वमेव। पर्वतो वह्निमानित्यादावपि वह्न्याद्याकारवृत्त्युपहितचैतन्यस्य स्वात्मांशे स्वप्रकाशतया प्रत्यक्षत्वात्। तत्तद्विषयांशप्रत्यक्षत्वं तु पूर्वो-क्तमेव। तस्य च भ्रान्तिमूलप्रत्यक्षे नातिव्याप्तिः, भ्रमप्रमासाधारण-प्रत्यक्षत्वसामान्यनिर्वचने तस्यापि लक्ष्यत्वात्। यदा तु प्रत्यक्षप्रमाया एव लक्षणं वक्तव्यं, तदा पूर्वोक्तलक्षणे अबाधितत्वं विषयविशेषणं

---

सर्वनियन्तृ ब्रह्मविष्णुशिवशब्दवाच्यमुपास्यमिति सिद्धम्। ज्ञेयं तु शुद्धमेवेति वक्ष्यति। ईश्वरसाक्षिणोऽनादित्वमुक्तमाक्षिपति — **नन्विति**। ऐक्षत ईक्षणं कृतवानित्यर्थः। अत्र वृत्तिरूपेक्षणस्यागन्तुकत्वं कथमुपपद्यत इति चोदयसि, उत स्वरूपेक्षणस्येति विकल्प्याद्यं दृष्टान्तमुखेन दूषयति — **यथेति**। वृत्तिविशेषाः जायन्त इत्यन्वयः। वृत्त्याकारं दर्शयति — **इदमिति**। द्वितीये औपचारिक-मागन्तुक(त्व)मस्तीत्याह— **तासामिति**।

प्रकरणार्थमुपसंहरति— **एवमिति**। ननु विशेषलक्षणस्य सामान्यलक्षण-व्याप्तत्वात् तदपि वक्तव्यमिति चेत् तदप्यस्तीत्याह— **तत्रेति**। तर्हि वह्न्यनुमि-तेरपि प्रत्यक्षत्वं स्यादेवेत्याशङ्क्य किं स्वांशे प्रत्यक्षत्वमुत विषयांशे। आद्ये इष्टा-पत्तिमाह— **पर्वत** इति। द्वितीये संविदभिन्नत्वरूपतल्लक्षणाभावान्न तथात्वमि-त्याह— **तदिति**। ननु विषयांशे प्रत्यक्षलक्षणं रूप्यभ्रमादावतिव्यापकं तत्रापि वृत्तिनिर्गमनद्वारा संविदभिन्नत्वसम्भवाद् इत्याशङ्क्य किं प्रत्यक्षत्वमात्रमापाद-यसि, उत प्रत्यक्षप्रमात्वम्। आद्य आह — **तस्येति**। विषयांशप्रत्यक्षलक्षणस्ये-त्यर्थः। द्वितीये विवक्षितलक्षणाभावान्नातिव्याप्तिरित्याह— **यदात्विति**। रूप्या-

**देयम् । शुक्तिरूप्यादिभ्रमस्य संसारकालीनबाधविषयप्रातिभासिक-रजतादिविषयकत्वात् । ननु विसंवादिप्रवृत्त्या भ्रान्तिज्ञानसिद्धावपि तस्य प्रातिभासिकतत्कालोत्पन्नरजतादिविषयकत्वे न प्रमाणं, देशान्तरीयरजतस्य क्लृप्तस्यैव तद्विषयत्वसम्भवादिति चेत् । न । तस्यासन्निकृष्टतया प्रत्यक्षविषयत्वायोगात् । नच ज्ञानं तत्र प्रत्यासत्तिः, ज्ञानस्य प्रत्यासत्तित्वे तत एव वह्न्यादेः प्रत्यक्षत्वापत्तौ अनुमानाद्युच्छेदापत्तेः ।**

---

दिभ्रमस्य प्रातिभासिकरजतादिविषयत्वमाकर्ण्य तदसहमानोऽन्यथाख्यातिवादी प्रत्यवतिष्ठते—**नन्विति** । ननु प्रत्यक्षप्रमालक्षणेऽबाधितत्वविशेषणं न देयं, सर्वज्ञानानां यथार्थत्वेन व्यावर्त्याभावात् । तथाहि—'विमतं ज्ञानं यथार्थं ज्ञानत्वात् सम्मतवत्' । विपक्षे च धियामनाश्वासादिदोषप्रसङ्गस्यैव बाधकत्वाद् इति प्राभाकरा मन्यन्ते । तान् निराकरोति—**विसंवादिप्रवृत्त्येति** । अयं भावः —रजतार्थिताजन्या शुक्तौ प्रवृत्तिः रजतत्वप्रकारकपुरोवर्तिविशेष्यकज्ञानसाध्या, रजतत्वप्रकारकप्रवृत्तित्वाद् रजते रजतार्थिप्रवृत्तिवत् । नचोपस्थितेष्टभेदाग्रहादेव प्रवृत्त्युपपत्तावप्रयोजकतेति वाच्यम् । लाघवेन विशिष्टज्ञानस्यैव प्रवर्तकत्वात्, अप्रामाण्यशङ्काशून्यतामात्रेण धियामाश्वाससम्भवाच्चेति । ननु ज्ञानस्य सविषयत्वान्यथानुपपत्तिरेव प्रातिभासिकरजतादिविषयत्वे प्रमाणमित्याशङ्क्यान्यथासिद्धिमाह —**देशान्तरीयरजतस्येति** । यद्यपि देशान्तरीयरजतस्यासन्निकृष्टत्वेन प्रत्यक्षविषयत्वं न सम्भवति, तथापि विशिष्टप्रत्यक्षे विशेष्येन्द्रियसन्निकर्षमात्रस्यैव हेतुतया प्रकृते च शुक्तीन्द्रियसन्निकर्षसत्त्वाद् रजतादिभानमविरुद्धमिति भावः । विनिगमकमाह —**क्लृप्तस्येति** । अत्र देशान्तरीयमसन्निकृष्टं भासते, उत सन्निकृष्टम् । नाद्यः, क्लृप्तत्वेऽपि देशान्तररजतस्य (न) भ्रमविषयत्वं सन्निकर्षाभावात् विशिष्टप्रत्यक्षे विशेष्येन्द्रियसन्निकर्षवद् विशेषणेन्द्रियसन्निकर्षस्यापि हेतुत्वात् । सत्यपि पर्वतरूपविशेष्येन्द्रियसन्निकर्षे विशेषणसन्निकर्षं विना विशिष्टप्रत्यक्षानुदयदर्शनादित्याशयेन परिहरति —**नेति** । यद्यपि यथार्थप्रत्यक्षमात्रे तत्सन्निकर्षस्य हेतुतयासन्निकृष्टस्यापि दोषबलाद् भानं सम्भवति, तथापि लाघवेन जन्यविशिष्टप्रत्यक्षतावच्छेदेन तत्सन्निकर्षजन्यत्वस्य निश्चयात्, तदभावेऽनुमितिवत् प्रत्यक्षमेव न स्यादिति भावः । द्वितीयेऽपि किं संयोगादिः सन्निकर्ष उत ज्ञानमेव सन्निकर्षः । नाद्यः, असिद्धेरित्यभिप्रेत्य द्वितीयं दूषयति —

**ननु रजतोत्पादकानां रजतावयवादीनामभावे शुक्तौ कथं तत्रापि रजतमुत्पद्यते इति चेत् । उच्यते । नहि लोकसिद्धसामग्री प्रातिभासिक-**

---

**नचेति** । **तत्रेति** । रजत इत्यर्थः । **तत इति** । ज्ञानप्रत्यासत्तित इत्यर्थः । **प्रत्यक्षत्वापत्ताविति** । ननु वह्न्यादेः किं लौकिकप्रत्यक्षत्वमापद्यते, उताऽलौकिकप्रत्यक्षत्वम् । नाद्यः, लौकिकसन्निकर्षाभावात् । न द्वितीयः, अलौकिकप्रत्यक्षसामग्रीतोऽनुमितिसामग्र्या बलवत्त्वेन वह्न्यनुमितेरेवोत्पत्तिरिति चेत्, तदनवबोधविजृम्भितम् । एवंसति करभ्रमानन्तरं संशयोत्तरप्रत्यक्षं न स्यात् । त्वदुक्तन्यायेन तत्राप्यनुमितिसम्भवात् । ननु दोषाभावसहितत्वस्यापि प्रत्यक्षसामग्रीविशेषणत्वान्नोक्तदोषः । नच करभ्रमानन्तरं संशयोत्तरपुरुषप्रत्यक्षं न स्यादिति वाच्यम् । अलौकिकत्वस्यापि प्रत्यक्षविशेषणत्वादिति चेत् । तर्हि धूमभ्रमाद् वह्न्यनुमितिभ्रान्तिर्न स्यात् । तत्रालौकिकप्रत्यक्षसामग्र्या दोषसहितत्वेन उक्तन्यायानवतारात् प्रत्यक्षमेव स्यात् । नच वह्निमनुमिनोमीत्यनुभवविरोधान्न प्रत्यक्षमिति वाच्यम् । सामग्रीसत्त्वे फलावश्यम्भावात् । नच प्रयोजनक्षतिभयेन सामग्री कार्यं नार्जयति । तस्माज्ज्ञानप्रत्यासत्त्यङ्गीकारे तथैव वह्न्यादिप्रत्यक्षोपपत्तावनुमानाद्युच्छेदप्रसङ्गो दुर्वार इति सहृदयैरालोचनीयम् ।

प्रातिभासिकरजतोत्पत्तिमाक्षिपति — **नन्विति** । नच रजतप्रतिभासान्यथानुपपत्त्या तत्र रजतमुत्पद्यत इति वाच्यम् । अख्यात्यन्यथाख्यात्योरभावेऽपि आत्मख्यातिमादाय तत्प्रतीतिसम्भवात् । विमतं रजतं ज्ञानाभिन्नं सम्प्रयोगमन्तरेणापरोक्षत्वात् संवेदनवद् इत्यनुमानाद् रजतस्य ज्ञानाभिन्नत्वे सिद्धे ज्ञानमेव रजताद्याकारेण प्रतीयते स्वप्रकाशत्वात् । तथाच रजतोत्पत्तिकल्पनमनवसरदुःस्थमिति भावः । किमत्र ख्यात्यन्तरं सिसाधयिषितमुत कारणाभावात् कथं रजतं जायत इति शङ्कामात्रम् । आद्य आह — **उच्यत इति** । इदमत्राकूतं — ज्ञानस्य रजताकारत्वं स्वाभाविकम्, अन्याधीनं वा । नाद्यः । सर्वज्ञानानां रजताकारत्वापत्तेः । न द्वितीयः । विज्ञानवादमताहानात् । किञ्च रजतस्य ज्ञानाभिन्नत्वेन सत्यतया बाधानुपपत्तेः । अपिच रजतस्यान्तरत्वापत्तेः । तथा सति इदं रजतमिति बहिष्ट्वानुभवविरोधप्रसङ्गाद्, गुञ्जापुञ्जे वह्न्यारोपे देहदाहप्रसङ्गेनात्मख्यातेरयोगाच्च । अस्तु तर्हि असदेव रजतम् । तथात्वे प्रत्यक्षविषयत्वानुपपत्तेः । सद् रजतत्वमित्यनुभवविरोधाच्च । नच सत्यमेव रजतमुत्पद्यता-

**रजतोत्पादिका । किन्तु विलक्षणैव । तथाहि—काचादिदोषदूषितलोचनस्य पुरोवृत्तिद्रव्यसंयोगादिदमाकारा चाकचक्याद्याकारा च काचिदन्तःकरणवृत्तिरुदेति । तस्यां च वृत्तौ इदमवच्छिन्नचैतन्यं प्रतिबिम्बते । तत्र पूर्वोक्तरीत्या वृत्तेर्बहिर्निर्गमनेनेदमवच्छिन्नचैतन्यं वृत्त्यवच्छिन्नचैतन्यं प्रमातृचैतन्यं चाभिन्नं भवति । ततश्च प्रमातृचैतन्याभिन्नविषयचैतन्यनिष्ठा शुक्तित्वावारिकाविद्या चाकचक्यादिसादृश्यसन्दर्शनस-**

---

मिति वाच्यम् । नेदं रजतमित्यनुभवविरोधात् । तस्मात् ख्यातिचतुष्टयस्याप्यसम्भवात् परिशेषात् सदसद्भिन्नरूपं मिथ्यारूपं रजतमेव स्वीकरणीयमिति । द्वितीये सत्यरजतस्यानुपपत्तिः, उत प्रातिभासिकस्य । आद्य इष्टापत्तिः । द्वितीये त्वाह — **नहीति** । क्लृप्तकारणं विना कथं कार्योत्पत्तिरिति शङ्कते — **किन्त्विति** । अन्यथानुपपत्त्या सत्यरजत एव कारणत्वं कल्प्यते इत्याह — **विलक्षणेति** । ननु विलक्षणसामग्रीकल्पनायां गौरवं, विलक्षणहेतोस्तत्राभावाच्चेत्याशङ्क्याह — **तथाहीति** । गौरवं प्रामाणिकमिति भावः । हेत्वभावोऽपि किमुपादानाभावः, उत निमित्ताभावः । नाद्य इत्याह — **अविद्येति** । अविद्या रजतज्ञानाद्याकारेण परिणमत इति सम्बन्धः । अज्ञानस्य रूप्यभ्रमोपादानत्वे किं मानम् । उच्यते । रूप्यभ्रमादिरज्ञानोपादेयः, तदितरानुपादानत्वे सति सोपादानत्वादाकाशादिवत् । नच सर्वस्यापि ब्रह्मोपादानतया सत्यन्तासिद्धिः । परिणामिन उपादानपदेन विवक्षितत्वात् । नचात्मा तथा, अपरिणामित्वात् । नाप्यन्तःकरणं, तस्य बहिरर्थे स्वातन्त्र्याभावात् । प्रातिभासिके देशान्तरीये वा रजतादौ बाह्येन्द्रियसन्निकर्षाभावेन द्वाराभावात् । अन्तःकरणस्यापि सादित्वेनोपादानापेक्षायाम् अज्ञानस्यैव तदुपादानतया वक्तव्यत्वाच्च । अतएवेदन्ताकारेणानुगतं दोषयुक्तं शुक्त्याद्युपादानमस्त्विति मध्वमतमपास्तम् । एकाज्ञानोपादानत्वे सम्भवति अन्योपादानत्वायोगात् । तस्मादज्ञानमेवोपादानकारणमिति स्थितम् । निमित्ताभावोऽपि विवेकाग्रहाभावः, उत सादृश्यज्ञानाभावः, आहोस्वित् प्रमातृसंस्काराभावः, उत दोषाभावः । नाद्यः । भेदग्रहणेऽपि बिम्बप्रतिबिम्बादिभ्रमदर्शनेन भ्रममात्रे तस्याजनकत्वात् । सिद्धान्ते भेदाग्रहस्य भावरूपाज्ञानेनान्यथासिद्धत्वेनाध्यासाहेतुत्वाच्चेति मनसि कृत्वा, सादृश्यस्याध्यासमात्रहेतुत्वं निरुपाधिकाध्यासे वा, नाद्यः लौहित्याद्यध्यासे व्यभिचारेण तस्याहेतुत्वात्, न द्वितीयः तस्य संस्कारोद्बोधेऽन्यथासिद्धत्वेनाजनकत्वादि-

**समुद्बोधितरजतसंस्कारसध्रीचीना काचादिदोषसमवहिता रजतरूपार्था-**

त्याह — **चाकचक्येति** । इदमुपलक्षणम् । स्वप्नादिभ्रमे नभोनीलिमाध्यासे व्यभिचारेण तस्याहेतुत्वादित्यपि बोध्यम् । भ्रमसंस्कारादपि भ्रमान्तरदर्शनेन गौरवेण च प्रमाहितत्वानन्तर्भावेन संस्कारमात्रस्य भ्रमजनकतया तस्य चात्र सत्त्वादित्यभिप्रायेण तृतीयं निराकरोति — **संस्कारसध्रीचीनेति** । चतुर्थं दूषयति— **काचादीति** । अथवा अविद्या रजताद्याकारेण ज्ञानाकारेण च परिणमत इति प्रथमं सम्बन्धः । सर्वदा परिणामप्रसङ्गं वारयति — **काचादीति** । दोषस्य कादाचित्कत्वात् परिणामस्यापि तथात्वमिति भावः । यद्यपि दोष(स्य) भ्रमहेतुत्वेऽपि न तद्विषयरजताद्यर्थहेतुत्वं, तथापि निर्विषयापरोक्षासम्भवेनान्यस्य विषयस्यासम्भवाद् दोषजन्यविषयस्य वक्तव्यतयोभयत्रापि हेतुत्वमिति भावः । यद्वा विमतं रजतज्ञानं यथार्थं संस्कारसम्प्रयोगजन्यत्वात् प्रत्यभिज्ञानवदित्याशङ्क्य दोषाजन्यत्वमुपाधिरित्याशयेनाह — **काचादीति** । यद्यपि दोषाणां प्रकृतकार्यप्रतिबन्धकत्वमात्रं न तद्विपरीतकार्यजनकत्वम्, अन्यथा दुष्टात् शालिबीजाद् यवाङ्कुरोत्पत्तिप्रसङ्गात्, तथाप्यन्वयव्यतिरेकाभ्यां दोषविशेषस्य विपर्ययहेतुत्वमाश्रयणीयं, दृष्टं हि भस्मरूपव्याधेर्बह्वन्नदाहकत्वम् । दावदग्धवेत्रबीजस्य कदल्यङ्कुरजनकत्वं चेति भावः । पूर्वाननुभूतस्य रजतस्य संस्काराभावे भ्रमायोगात् सोऽप्यावश्यक इत्याह — **संस्कारेति** । अन्वयव्यतिरेकाभ्यां संस्कारस्यार्थेऽपि हेतुत्वमिति भावः । बहुविषयसंस्कारसत्त्वेन रूप्यसंस्कारस्यैव कथं कार्यजनकत्वमित्यत आह — **समुद्बोधितेति** । उद्बोधकमाह — **चाकचक्येति** । कार्यं सोपादानमिति न्यायेनोपादानकारणमाह — **अविद्येति** । नन्विदन्त्वरजतत्वयोः प्रतीयमानत्वान्न तदुभयप्रकारत्वमज्ञानस्येत्यत आह — **शुक्तित्वेति** । यद्वा सादृश्यबोधोद्बोधितसंस्काराद् यदि रजताभेदारोपः, तदा शुक्त्यन्तरसादृश्याच्छुक्त्यन्तरा(सादृश्य?)भेदभ्रमः किं न स्यादित्याशङ्क्याह — **शुक्तित्वेति** । शुक्तित्वोपहितचैतन्यावारिकेत्यर्थः । तथाच यत्प्रकारिका याविद्या, सा तदन्यप्रका(रा)रोपजनिकेत्यभ्युपगमादिति भावः । नन्वज्ञानस्य निराश्रयत्वे ब्रह्मपरतन्त्रता न स्यात् । साश्रयत्वे चैतन्यस्य निर्धर्मकत्वेन जडस्य प्रकाशाप्रसक्तत्वेन च तदाश्रयत्वायोगादित्यत आह— **विषयचैतन्येति** । यद्वा अज्ञानस्यान्तरत्वेन तत्परिणामस्य रजतस्य कथं बहिष्ठत्वमित्यत आह — **विषयेति** । विषयोपहितचैतन्यनिष्ठेत्यर्थः । ननु शुक्तिं न जानामीत्यनुभवाज्जीव-

**कारेण रजतज्ञानाभासाकारेण च परिणमते ।**

**परिणामो नामोपादानसमसत्ताककार्यापत्तिः । विवर्तो नामो-**

---

स्यैवाविद्याश्रयत्वप्रतीतेः कथं विषयचैतन्यनिष्ठेत्युच्यत इत्यत आह — **तत-श्चेति** । ननु प्रमातृचैतन्यविषयचैतन्ययोर्भिन्नदेशस्थत्वेन कथमभेद इत्यत आह — **तत्रेति** । अध्यासेहेत्वधिष्ठानज्ञानं दर्शयति — **इदमाकारेति** । नचाधिष्ठानज्ञानस्यारोपहेतुत्वे मानाभावः, अन्वयव्यतिरेकाभ्यामेव तस्य तद्धेतु-त्वनिर्णयात् । नच करसंमृदितलोचनस्य योऽयं केशोन्धुकभ्रमस्तत्र व्यभि-चारेण व्यतिरेकोऽसिद्ध इति वाच्यम् । सौरालोकाद्यवयवस्यैव तदधिष्ठानत्वात् । अतएव तमसि न तद्भ्रम इति भावः । ननु रजतभ्रमात् पूर्वं सादृश्यज्ञाना-भावात् कथं संस्कारोद्बोध इत्यत आह — **चाकचक्येति** । नन्वसत्यरज-तस्य प्रतिभासमात्रशरीरत्वेन प्रतिभासात् पूर्वमिन्द्रियसंयोगाभावात् कथमिन्द्रि-याद्यन्वयानुविधानमुपपद्यत इत्याशङ्क्येदमाकारवृत्तावधिष्ठानज्ञाने तस्योपयोग इत्याशयेनाह — **लोचनस्येति** । ननु विमतं रजतमिन्द्रियसंयुक्तमपरोक्षत्वाद् घटादिवत् । अन्यथा सम्प्रयोगनिरपेक्षसंस्कारजन्यत्वे रजतज्ञानस्य स्मृतित्वा-पत्तेरिति चेन्न । सम्प्रयोगमन्तरेणापि संविदभिन्नत्वमात्रेणापरोक्षत्वसम्भवादिति भावः । नन्विदमित्यधिष्ठानज्ञानं जायमानं किमिति सन्निहितं शुक्तित्वं न विषयीकरोतीत्याशङ्क्य दोषेण प्रतिबन्धादित्याह — **काचादीति** । ननु रज-ताकारवृत्तिं विना रजतोत्पत्तिमात्रेण कथं रजतस्यापरोक्षत्वव्यवहार इत्यत आह — **रजतज्ञानेति** । यद्यप्यत्र रजतगोचरान्तःकरणवृत्त्यापि रजतापरोक्ष-त्वव्यवहारः सम्भवति, तथाप्यपरोक्षबाह्यगोचरान्तःकरणवृत्तेर्विषयजन्यत्व(य ?)-नियमादविद्या(या) वृत्तिजनकसामग्र्याः सत्त्वाद् वा तथोक्तमिति ध्येयम् ।

नन्वविद्याया निरवयवत्वेन रजताकारपरिणामो न सम्भवतीत्याशयेन चोद-यति — **परिणाम** इति । विचित्रशक्तिमत्त्वादविद्यायाः सर्वमुपपन्नमित्याह — **उपादानेति** । यद्वा ननु मृत्परिणामरूपस्य घटस्य यथा तद्रूपेणोपलब्धिः, तथा-विद्यापरिणामरूप(स्याह ? स्य) तयोपलब्धिः स्यात् नचैवमिति शङ्कते — **परि-णाम** इति । सद् रजतमित्यत्राप्यविद्यानिष्ठासद्भिन्नत्वरूपसत्त्वोपलब्धेः सर्वात्मना तदुपलब्धेर्घटादावप्यदर्शनादित्याशयेनाह— **उपादानेति** । **कार्यापत्तिरिति** । कार्योत्पत्तिरित्यर्थः । ननु 'यतो वा इमानी'त्यादिना ब्रह्मण एव जगदुपादानत्व-

**पादानविषमसत्ताककार्यापत्तिः । प्रातिभासिकरजतं त्वविद्यापेक्षया परिणामः । चैतन्यापेक्षया विवर्त इति चोच्यते । अविद्यापरिणामरूपं च तद् रजतम् अविद्याधिष्ठाने इदमवच्छिन्नचैतन्ये वर्तते । अस्मन्मते सर्वस्यापि कार्यस्य स्वोपादानाविद्याधिष्ठानाश्रितत्वनियमात् । ननु चैतन्यनिष्ठरजतस्य कथमिदं रजतमिति पुरोवर्तिना तादात्म्यम् । उच्यते । यथा न्यायमत आत्मनिष्ठस्य सुखादेः शरीरनिष्ठत्वेनोपलम्भः शरीरस्य सुखाद्यधिकरणावच्छेदकत्वात्, तथा चैतन्यमात्रस्य रजतं प्रत्यनधिष्ठानतया इदमवच्छिन्नस्य तदधिष्ठानत्वेनेदमोऽवच्छेदकतया रजतस्य पुरोवर्तिसंसर्गप्रत्यय उपपद्यते । तस्य च विषयचैतन्यस्य तदान्तःकरणोपहितचैतन्याभिन्नतया विषयचैतन्येऽध्यस्तमपि रजतं**

---

प्रतिपादनाद् रजतेऽपि ब्रह्मैवोपादानं नाविद्येत्याशङ्क्य रजताकारेण परिणतमायाधिष्ठानत्वेन ब्रह्मण उपादानत्वं परिणामितयाविद्याया इति वक्तुमाकाङ्क्षामुद्भावयति — **विवर्तो नामेति** । भ्रान्त्यधिष्ठानं दर्शयति — **अविद्येति** । तत्र हेतुमाह — **अस्मन्मत इति** । **तादात्म्यमिति** । व्यधिकरणत्वादिति भावः । किमत्र शुद्धचैतन्यस्य रजताधिष्ठानत्वं निराक्रियते उत इदमवच्छिन्नस्येति विकल्प्य द्वितीयं दृष्टान्तमुखेन निराकरोति— **यथेति** । तथेत्यस्येदमवच्छिन्नस्येत्यनेन सम्बन्धः । आद्य इष्टापत्तिमाह— **चैतन्यमात्रस्येति** । शुद्धस्य रजताधिष्ठानत्वे इदानीं तत्साक्षात्काराभावेन रज(तावबो ? तबा)धो न स्यादिति भावः । प्रातिभासिकरजते प्रमाणमाह — **केवलेति** । ननु रजतस्य शुक्त्यवच्छिन्नचैतन्याध्यस्तत्वेन साक्षिण्यनध्यस्ततया सम्बन्धाभावात् साक्षिणो रजतभानं न स्यादित्यत आह — **तस्य चेति** । ननु सिद्धान्ते इदमवच्छिन्नचैतन्यनिष्ठरजतस्य दुष्टकरणानामिवादुष्टकरणानामपि पुरोवर्तिसंयोगजनितबहिर्निःसृतान्तःकरणोपहितचैतन्याभिन्नविषयचैतन्याध्यस्ततया साक्षात् साक्षिसम्बन्धात् पुरोवर्तीदन्त्वादिवद् भानापत्तिरित्यत आह—**सुखादिवदिति** । यथा सिद्धान्ते देवदत्तयज्ञदत्तयोः पुरोवर्तिसम्प्रयोगजनितबहिर्निस्सृतोभयान्तःकरणोपहितसाक्षिचैतन्यस्यै(साक्षिण्यै ? )क्येऽपि नान्यान्तःकरणगतसुखमन्यस्य विषयः तदीयविषयारब्धत्वाभावाद्, यथावा परमते द्वित्वादेः संयुक्तसमवायसम्बन्धस्य सर्वपुरुषसाधारण्येऽपि यदपेक्षाबुद्धिजन्यं यद् द्वित्वादि, तत् तेन पुरुषेण गृह्यते, नान्येन । तथा प्रातिभासिकरजतमप्यन्यपुरुषीयज्ञानवेद्यं न भवति, किन्तु

**साक्षिण्यध्यस्तं केवलसाक्षिवेद्यं सुखादिवदनन्यवेद्यमिति चोच्यते । ननु साक्षिण्यध्यस्तत्वेऽहं रजतमिति प्रत्ययः स्यात् अहं सुखीतिवदिति चेत् । उच्यते । नहि सुखादीनामन्तःकरणावच्छिन्नचैतन्यनिष्ठाविद्याकार्यत्वप्रयुक्तमहं सुखीति ज्ञानं, सुखा(दी)नां घटादिवच्छुद्धचैतन्य एवाध्यासात् । किन्तु यस्य यदाकारानुभवसंस्कारसहकृताविद्याकार्यत्वं, तस्य तदाकारानुभवविषयत्वमित्येवानुगतं नियामकम् । तथाचेदमाकारानुभवसंस्कारसहकृताविद्याकार्यत्वात् घटादेरिदन्तानुभवविषयत्वम् । अहमाकारानुभवाहितसंस्कारसहिताविद्याकार्यत्वादन्तःकरणादेरहमनुभवविषयत्वम् । शरीरेन्द्रियादेरुभयविधाविद्यानुभवसंस्कारसहिताविद्याकार्यत्वादुभयविधानुभवविषयत्वम् । तथाचोभयविधानुभवः इदं शरीरमयं देहोऽहं मनुष्योऽहं ब्राह्मणः इदं चक्षुरहं काण इदं श्रोत्रमहं बधिर इति । प्रकृते च प्रातिभासिकरजतस्य प्रमातृचैतन्याभिन्नेदमवच्छिन्नचैतन्यनिष्ठाविद्याकार्यत्वेऽपीदं रजतमिति सत्यस्थलीयेदमाकारानुभवाहितसंस्कारजन्यत्वादिदमाकारानुभवविषयता, नत्वहं रजतमित्यहङ्कारानुभवविषयतेत्यनुसन्धेयम् । नन्वेवमपि मिथ्यारजतस्य**

---

दोषाश्रयपुरुषग्राह्यम् । यदीयदोषप्रक्षुभिताविद्या यदाकारेण परिणमते तस्य परिणामस्य तद्दोषाश्रयपुरुषग्राह्यत्वमिति न्यायादिति भावः । मूले ननु केवलसाक्षिवेद्यत्वमिति त्वयोच्यते, अनन्यवेद्यत्वमित्याचार्यैरिति कथमेतदित्यत आह — सुखादिवदिति । प्रमाणव्यापारानिरपेक्षसाक्षिवेद्यमित्यर्थः । रजतादेः साक्षिण्यध्यस्तत्वमाक्षिपति — नन्विति । अत्र किं सुखाद्यधिष्ठानमन्तःकरणावच्छिन्नमित्यभिप्रेत्य तद्दृष्टान्तेनाहं रजतमिति प्रतीत्यापादनम्, उत तदधिष्ठानस्य वस्तुतोऽन्तःकरणावच्छिन्नत्वात् । नान्त्यः, अधिष्ठानचैतन्यस्यान्तःकरणावच्छिन्नत्वमात्रेणाहं रजतमिति प्रतीत्यापादने घटाद्यधिष्ठानशुद्धचैतन्यस्यापि बहिर्निःसृतान्तःकरणावच्छिन्नत्वादहं घट इति प्रतीत्यापत्तेरित्याह — उच्यत इति । आद्य आह — नहीति । किं तस्याहं सुखीत्याकारताप्रयोजकं, चैतन्यमात्राध्यस्तत्वस्य प्रपञ्चमात्राविशिष्टत्वादिति पृच्छति — किन्त्विति । उक्तनियामकमुदाहरणनिष्ठतया दर्शयति — तथाचेत्यादिनाहं बधिर इत्यन्तेन । **प्रकृते** योजयति — **प्रकृत इति** । एकदेशिमतमुत्थापयति — **नन्वेवमिति** ।

साक्षात् साक्षिसम्बन्धितया भानसम्भवे रजतगोचरज्ञानाभासरूपाया अविद्यावृत्तेरभ्युपगमः किमर्थ इति चेत्। उच्यते । स्वगोचरवृत्त्युपहित-चैतन्याभिन्नसत्ताकत्वाभावस्य विषयापरोक्ष्यरूपतया रजतस्यापरोक्षत्व-सिद्धये तदभ्युपगमात् । नन्विदंवृत्तेः रजताकारवृत्तेश्च प्रत्येकमेकैकविष-यत्वे गुरुमतवद् विशिष्टज्ञानानभ्युपगमे कुतो भ्रमज्ञानसिद्धिरिति चेत्। न । वृत्तिद्वयप्रतिबिम्बितचैतन्यस्यैकस्य सत्यमिथ्यावस्तुतादात्म्याव-गाहित्वेन भ्रमत्वस्वीकारात् । अतएव साक्षिज्ञानस्य सत्यासत्यविषय-तया प्रामाण्यानियमादप्रामाण्योक्तिः साम्प्रदायिकानाम् । ननु सिद्धा-न्ते देशान्तरीयरजतमप्यविद्याकार्यमध्यस्तं चेति कथं शुक्तिरूप्यस्य ततो वैलक्षण्यमिति चेत् । न । त्वन्मते सत्यत्वाविशेषेऽपि केषाञ्चित्

---

किमर्थ इति । नचावरणाभिभवार्था वृत्तिरस्त्विति वाच्यम् । प्रतिभासमात्रशरीरस्य रजतस्याज्ञानावृतत्वाभावादिति भावः । किमविद्यावृत्तेर्वैयर्थ्यमुत वृत्तिमात्रस्य । नाद्यः, प्रागेव साफ(ल्य)स्योक्तत्वादित्याह —उच्यत इति । द्वितीये त्वाह— स्वगोचरेति । नन्विदमाकारज्ञानस्यान्तःकरणवृत्तित्वेन रजतज्ञानस्याविद्यावृत्ति-त्वेन च तयोर्भेदात् कथं सत्यमिथ्यावस्तुतादात्म्यावगाहित्वेन भ्रमत्वमिति चोद-यति—नन्विति । किं वृत्तेर्ज्ञानत्वमाश्रित्य तद्भेदात् (वा) तदनुपपत्तिः । आद्य आह— नेति । वृत्तेर्जडत्वेन ज्ञानत्वाभावाद् व्यवहा(र)स्य तु भाक्तस्वरूपेणा-प्युपपत्तिरित्युक्तत्वादिति भावः । द्वितीयं दूषयति— वृत्तिद्वयेति । अविद्या-न्तःकरणवृत्त्योरेकत्र विषयचैतन्यप्रदेशे विद्यमानतया चैतन्यभेदापादकत्वाभावा-दिति भावः । नन्वविद्या(नि?)वृत्तिरेवाधिष्ठानविषया भवतु, किमतिरिक्तेदमा-कारवृत्त्यङ्गीकारेण । अतएवेदं रजततया जानामीतीदमर्थतादात्म्यानुभव इति चेत् । तत्र वक्तव्यम् । किमविद्यावृत्तिसमये इदंवृत्त्युत्पत्तिनिरासोऽभिमतः, उत तत्पूर्वम् । नाद्यः । पूर्वोत्पन्नवृत्तेरेव तदा सत्त्वोपगमेन तत्समये तदनुत्पत्ते-रिष्टत्वात् । न द्वितीयः । उक्तविधया तस्या (आ)वश्यकत्वेन तामादायैव तत्स-मयेऽप्युक्तानुभवोपपत्तावाभासवृत्तेरिदंविषयत्वे मानाभावादिति । वृत्तिद्वयप्रति-फलितचैतन्यस्य भ्रमत्वे सम्मतिमाह— अतएवेति । यद्वा साक्षिप्रमाणेन शुक्तौ रजतस्य प्रतीयमानत्वान्नेदं रजतमिति निषेधो न स्यादित्याशङ्क्य तस्य प्रमाणत्वानियमान्न विरोध इत्याह — अतएवेति । ननु रजतस्याविद्याकार्यत्वे व्यावहारिकत्वमेव स्यान्नतु प्रातिभासिकत्वमिति शङ्कते— नन्विति । त्वन्मत

क्षणिकत्वं केषाञ्चित् स्थायित्वमित्यत्र यदेव नियामकं तदेव स्वभावविशेषादिकं ममापि । यद्वा घटाद्यध्यासेऽविद्यैव दोषत्वेन हेतुः । शुक्तिरूप्याद्यध्यासे काचादयोऽपि दोषाः । तथाचागन्तुकदोषजन्यत्वं प्रातिभासिकत्वे प्रयोजकम् । अतएव स्वप्नोपलब्धरथादीनामागन्तुकनिद्रादोषजन्यत्वात् प्रातिभासिकत्वम् । ननु स्वप्नस्थले पूर्वानुभूतरथादेः स्मरणमात्रेणैव व्यवहारोपपत्तौ न रथादिसृष्टिकल्पनं, गौरवादिति चेत् । न । रथादेः स्मृतिमात्राभ्युपगमे रथं पश्यामि स्वप्ने रथमद्राक्षमित्याद्यनुभवविरोधापत्तेः । "अथ रथान् रथयोगान् पथः सृजते" इति रथादिसृष्टिप्रतिपादकश्रुतिविरोधापत्तेश्च । तस्माच्छुक्तिरूप्यवत् स्वप्नोपलब्धरथादयोऽपि प्रातिभासिका यावत्प्रतिभासमवतिष्ठन्ते ।

---

इति । न्यायमत इत्यर्थः । केषाञ्चिदिति । शब्दबुद्धिकर्मणामित्यर्थः । क्षणिकत्वमिति । चतुर्थक्षणवर्तिध्वंसप्रतियोगित्वमित्यर्थः । ननु प्रतिव(न्धे ? न्दे)रनुत्तरत्वात् स्वभावविशेषाश्रयणे ऽपेक्षणीयतापत्तेश्च । किञ्च विमतं न प्रातिभासिकमविद्याकार्यत्वाद् घटवदित्यनुमानसम्भवात् कथं देशान्तरीयरजतापेक्षया शुक्तिरूप्यस्य वैलक्षण्यमित्यत आह---- यद्वेति । तथाचागन्तुकदोषाजन्यत्वमनुमान उपाधिरिति भावः । अस्त्वेवं ततः किमित्यत आह--- तथाचेति । ननु स्वप्नप्रपञ्चस्य प्रातिभासिकत्वं न स्याद् , आगन्तुककाचादिदोषजन्यत्वाभावादित्यत आह --- अतएवेति । नहि सर्वत्र काचादिरेव दोषः । किन्तु क्वचित् काश्चिद् दोष इत्यभ्युपगमादिति भावः । यद्वा प्रातिभासिकत्वाभावसाधकानुमान उपाधिमुक्त्वा व्यभिचारमप्याह--- अतएवेति । अथवा न केवलं जाग्रत्कालीनाध्यासप्रातिभासिकत्वप्रयोजकमिदम्, अपितु स्वप्नाध्यासप्रातिभासिकत्वेऽपीत्याह--- अतएवेति । व्यवहारेति । रथादिव्यवहार इत्यर्थः । रथमिति । तथाच गौरवं प्रामाणिकमिति भावः । ननु स्वाप्नगजादिज्ञानं स्मृतिरूपमनुभवसामग्र्यजन्यत्वे सति जन्यज्ञानत्वात् स घट इति स्मृतिवद् इत्यनुमानात् स्मृतिरूपत्वे सिद्धे प्रातिभासिकत्वासम्भव इति चेत् । तत्र वक्तव्यम् । किमुक्तहेतुना स्मृतित्वं सिसाधयिषितमुतानुभवत्वाभावमात्रम् । नाद्यः । गवयादिस्मृतिवद् दोषजन्यत्वं भ्रान्तित्वं च तस्य न स्यात् । न द्वितीयः । निद्रादिदोषसहकृतमनस एव तज्जनकत्वसम्भवाद्, उक्तश्रुत्यादिना सृष्ट्यनुभवेनानुमानस्य बाधितत्वाच्चेत्याशयेनोपसंहरति--- तस्मादिति । प्रातिभासिकशब्दा-

**ननु स्वप्ने रथाद्यधिष्ठानतयोपलभ्यमानदेशविशेषस्यापि तदासन्निकृष्टतयानिर्वचनीयप्रातिभासिकदेशोऽभ्युपगन्तव्यः, तथाच रथाद्य-**

र्थमाह — **यावदिति** । ननु घटादेरपि यावत्प्रतिभाससत्त्वेन तस्यापि प्रातिभासिकत्वाप(त्तेः ? त्तिः) । नच व्यवहारकाले बाध्यत्वं प्रातीतिकत्वं, स्वाप्नगजादेः स्वव्यवहारसमये बाधाभावेनासम्भवापत्तेः । नापि ज्ञाननिवर्त्यत्वं, वियदादेरपि प्रातिभासिकत्वापत्तेः । (नाप्यर्थक्रियाकारित्वं, भयादिलक्षणार्थक्रियाकारित्वस्य रज्जुसर्पादावपि सत्त्वेनाव्याप्त्यापत्तेः । स्वप्नदृष्टवह्नयु(का ? ल्का)दीनां नानापाकाद्यर्थक्रियाकारित्वदर्शनाच्च तात्त्विकमेव तदिति चेत्, तत् किमिदानीन्तनादिकं तात्त्विकम्, अद्वैतश्रुतिविरोधात् । नापि सद्योविनाश्यं प्रातीतिकं, ज्ञानेच्छाद्वेषादीनां जलधरपटलादीनां च जाग्रत्यपि सद्योविनाशदर्शनादतिव्याप्तेः कदाचित् पुत्रादिपरम्परया बहुकालं स्वप्नेऽप्यबाधदर्शनादव्याप्त्यापत्तेः । ननु प्रमाणायोग्यत्वं प्रातीतिकत्वमिति चेत् । न । प्रमाणशब्देन किं यथार्थज्ञानं विवक्षितमुताबाधितज्ञानम्, आहोस्विदिन्द्रियादिजन्यज्ञानम् । नाद्यः । शुक्तिरजतादिज्ञानस्यापि प्रमाणत्वेन तद्योग्ये रजतादावसम्भवापत्तेः । न द्वितीयः । वियदादिज्ञानस्य बाधितत्वेन तदयोग्ये तत्रातिव्याप्तेः । न तृतीयः । सुखादिवृत्तावतिव्याप्तेः । ?) तस्मात् प्रातीतिकत्वं दुर्निरूपमिति चेत् । न । संसारदशायां बाधितत्वस्यैव प्रातीतिकशब्दार्थत्वान्नोक्तदोषः । ननु तक्षाद्युचितकारणाभावेऽपि स्वाप्नरथादयः कथं जायेरन्निति चेत् । न । देवासुरसङ्ग्रामादौ हस्त्यश्वरथनागवृकव्याघ्रवराहमहिषसिंहविविधपदातितदायुधपट्टप्रासदण्डतोमरमुसलमुद्गरादीनां देवासुरविनिर्मितानां देहच्छेदभेदमोहाद्यर्थक्रियाहेतूनां दृष्टहेत्वभावेऽप्याविर्भावदर्शनात्, कठिनतरद्रव्यसम्बन्धेऽप्यसम्भाव्यभानगर्जितस्य धूमसदृशमेघसङ्गतिमात्रेण जननदर्शनाच्च, विरलावयवजलमुचामविरलावयवकठिनद्रव्यधार्यमाणतया दृष्टत्वाच्च, मह्यादिभ्य इव मेघमण्डलेभ्योऽप(रि)मितासङ्कीर्णसदृशपरिमाणनिरन्तरचिरन्तनचिरकालविच्छिन्नप्रवाहदण्डायमानजलावयवादीनां पतनस्य दृष्टहेत्वभावेऽपि जननाच्च । उदाहृतस्थलेषु (अ)दृष्टमादाय हेतुत्वोपवर्णने स्वप्नेऽपि तत एव हेतुसत्त्वं स्यादिति दिक् ॥

नन्वत्र किमात्मनि स्वप्नाध्यास उतानात्मनि । नाद्यः । अधिष्ठानज्ञानाभावादिति मनसि निधाय द्वितीयं दूषयति — **नन्विति** । प्रातिभासिकस्या-

ध्यासः कुत्रेति चेत् । न । चैतन्यस्यैव स्वयम्प्रकाशस्य रथाद्यधिष्ठान-त्वात् । प्रतीयमानो हि रथादिरस्तीत्येव प्रतीयत इति सद्रूपेण प्रतीयमानं चैतन्यमेवाधिष्ठानम् । देशविशेषोऽपि चिदध्यस्तः प्रातिभासिकः । रथा-दाविन्द्रियग्राह्यत्वमपि प्रातिभासिकं, तदा सर्वेन्द्रियाणामुपरमात् । अहं गज इत्यादि प्रतीत्यापादनं तु पूर्ववन्निरसनीयम् । स्वप्नगजादयः साक्षा-न्मायापरिणामा इति केचित् । अन्तःकरणद्वारा तत्परिणामा इत्यपरे । ननु गजादेः शुद्धचैतन्याध्यस्तत्व इदानीं तत्साक्षात्काराभावेन जागर-णेऽपि स्वप्नोपलब्धगजादयोऽनुवर्तेरन् । उच्यते । कार्यविनाशो हि द्वि-विधः । कश्चिदुपादानेन सह । कश्चित् तु विद्यमान एवोपादाने । आद्यो

---

ध्यासाधिष्ठानत्वायोगादिति भावः । प्रथमपक्षमादायाह — नेति । अधिष्ठान-ज्ञानं दर्शयति — **स्वयमिति** । चैतन्यस्य रथाद्यधिष्ठानत्वेऽनुभवं प्रमाणयति— **प्रतीयमान** इति । ननु चैतन्यस्य रथाद्यधिष्ठानत्वे देशविशेषसम्बन्धितया कथं तद्भानमित्याशङ्क्य रथादिवद् देशविशेषस्यापि चैतन्याध्यस्ततया स्फटिकाश्म-प्रतिबिम्बितमुखलौहित्यवद् देशविशेषस्य रथादेश्च परस्परसम्बन्धितया प्रति-भानसम्भवादित्याह — **देशविशेषोऽपीति** । ननु रथादीनामिन्द्रियासन्निकृष्ट-तया चक्षुषा रथं पश्यामीत्यनुभवः कथमित्यत आह — **रथादाविति** । ननु रथादेश्चैतन्याध्यस्तत्वेऽहं गज इति प्रतीत्यापत्तिरित्यत आह — **अहमिति** । अयं गज इति सत्यस्थलीयायमाकारानुभवाहितसंस्कारजन्यत्वादयमाकारानुभव-विषयता, नत्वहं गज इत्यहमाकारानुभवविषयतेति भावः । ननु गजादेर्भाव-कार्यत्वेनोपादानकारणं वाच्यम् । न तावदात्मोपादानम् , आत्मनो निरवयव-त्वेन तदाकारपरिणामायोगात् । नापि निद्रादिरन्तःकरणं वोपादानं, तयोर्भिन्न-देशत्वात् । किञ्चान्तःकरणादिकं तात्त्विकं वातात्त्विकं वा । नाद्यः । विप-रीतगजादिपरिणामायोगात् । न द्वितीयः । तदुपादानभूताविद्याया एवोपादान-त्वसम्भवात् । नच तदपि, निरवयवत्वादित्यत आह — **स्वप्नगजादय इति** । विचित्रशक्तिमत्त्वादविद्यायाः परिणामित्वमुपपन्नमिति भावः । **तत्परिणामा** इति । अविद्यापरिणामा इत्यर्थः । नन्वधिष्ठानज्ञानस्यैव भ्रमनिवर्तकत्वेन तदभावे स्वप्नार्थबाधो न स्यादिति शङ्कते — **नन्विति** । अधिष्ठानतत्त्वसाक्षात्काराभावे-ऽपि नाश उपपद्यत इति वक्तुं नाशभेदमाह — **उच्यत इति** । अत्र गजादे-

बाधः । द्वितीयस्तु निवृत्तिः । आद्यस्य कारणमधिष्ठानतत्त्वसाक्षात्कारः । तेन विनोपादानभूताविद्याया अनिवृत्तेः । तदिह ब्रह्मसाक्षात्काराभावात् स्वप्नप्रपञ्चो मा बाधिष्ट । मुसलप्रहारेण घटादेरिव विरोधिवृत्त्यन्तरोदयेन स्वजनकीभूतनिद्रादिदोषविनाशेन वा गजादिनिवृत्तौ को विरोधः । एवञ्च शुक्तिरूप्यस्य शुक्त्यवच्छिन्नचैतन्यनिष्ठतूलाविद्याकार्यत्वपक्षे शुक्तिरिति ज्ञानेन तदज्ञानेन सह रजतस्य बाधः । मूलाविद्याकार्यत्वपक्षे मूलाविद्याया ब्रह्मसाक्षात्कारमात्रनिवर्त्यतया शुक्तितत्त्वज्ञानान्निवृत्तिमात्रं मुसलप्रहारेण घटस्येव । ननु शुक्तौ रजतस्य प्रतिभाससमयसत्त्वाभ्युपगमे इदं न रजतमिति त्रैकालिक-

---

बाधाभाव आपाद्यते, उत निवृत्त्यभावः । आद्य इष्टापत्तिरित्याह — तदिहेति । द्वितीये त्वाह — मुसलेति । नाशकारणमाह — विरोधीति । ननु सविलासाविद्यानिवृत्तेर्बाधरूपत्वे शुक्तितत्त्वज्ञानाद् रूप्याध्यासस्य बाधो न स्यात् । ब्रह्मसाक्षात्कारैकनिवर्त्यस्याज्ञानस्य नाशाभावात् । तन्नाशे सर्वमुक्तिप्रसङ्गादित्याशङ्क्य, रूप्यभ्रमस्तूलाविद्याजन्यो वा मूलाविद्याजन्यो वा । आद्य आह — एवञ्चेति । द्वितीये त्वाह — मूलेति । ननु शुक्तित्वरजतत्वयोरविरोधभ्रमदशायां नेदं रजतमिति ज्ञानस्यैवाविद्यया सह रजतभ्रमनिवर्तकत्वदर्शनात् कथं शुक्तितत्त्वज्ञानस्य तन्निवर्तकत्वसम्भव इति चेत् । न । रजतभ्रमो हि द्विविधः । रजतभेदविषयकाज्ञानजन्यः, शुक्त्यज्ञानजन्यश्चेति । तत्राद्यो रजतभेदग्रहान्निवर्तते । रजतभेदविषयकज्ञानाज्ञानयोः समानविषयत्वेन विरोधात् । द्वितीयस्तु शुक्तितत्त्वज्ञानान्निवर्तते । तयोर्विरोधात् । नच नेदं रजतमिति ज्ञानस्य बाधकत्वे शुक्तितत्त्वज्ञानमेव बाधकं नेदं रजतमित्यनुवाद इति टीकाविरोधः स्यादिति वाच्यम् । शुक्त्यज्ञानजन्यरजतभ्रमापेक्षया नेदं रजतमित्यनुवाद इत्युक्तमिति टीकाशयकल्पनात् । तथाच रूप्यभ्रमस्य यत्र रजतभेदगोचराविद्याकार्यत्वं तत्र नेदं रजतमित्येव बाधकं, शुक्तिरिति ज्ञानमनुवादः । यत्र च शुक्त्यज्ञानजन्यं तत्र शुक्तिरिति ज्ञानं बाधकं, नेदं रजतमित्यनुवाद इति सिद्धम् । रजतस्य प्रातिभासिकत्वे बाधकमाशङ्कते — नन्विति । ननु नेदं रजतमिति देशान्तरीयमेव रजतं निषिध्यते, नतु पुरोवर्ति येन विरोधी स्यादिति चेत् । न । प्रसक्तस्य प्रतिषेध इति न्यायेन देशान्तरीयस्य सन्निकर्षाभावेन पुरोवर्ति-

**निषेधज्ञानं न स्यात् किन्तु इदानीमिदं न रजतमिति, इदानीं घटः श्यामो नेतिवदिति चेत् । न । नहि तत्र रजतत्वावच्छिन्नप्रतियोगिताकाभावो निषेधधीविषयः । किन्तु लौकिकपरमार्थत्वावच्छिन्नप्रातिभासिकरजतप्रतियोगिताकः । व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाभ्युपगमात् । ननु प्रातिभासिकरजते पारमार्थिकत्वमवगतं वा, न वा । अनवगमे प्रतियोगितावच्छेदकावच्छिन्नाज्ञानादभावप्रत्यक्षानुपपत्तिः । अवगमेऽपरोक्षावभासस्य तात्कालीनविषयसत्तानियतत्वाद् रजते पारमार्थिकत्वमप्यनिर्वचनीयं रजतवदेवोत्पन्नमिति तदवच्छिन्न-**

---

न्यप्रसक्ततया निषेधायोगात् । अन्यथानिर्वचनीयरजताभ्युपगमवैयर्थ्यापत्तेः । पुरोवर्तिनो निषेधप्रतियोगित्वाभावे तस्य मिथ्यात्वाभावप्रसङ्गाच्च । नेदं रजतमिति ज्ञानेन तस्य मिथ्यात्वज्ञापनात् । नच नेदं रजतमिति ज्ञानं रजतस्य शून्यत्वमेवावगमयति न मिथ्यात्वमिति वाच्यम् । रजते शून्यलक्षणनिषेधप्रतियोगित्वस्य प्रतीयमानत्वात् । अतएव मिथ्यारजतमभादित्यनुभवः । तथाच पुरोवर्ति रजतमेव निषेधप्रतियोगितया प्रतीयत इति । न स्यादिति । रजतत्वरूपप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगि(त ? स)त्त्वज्ञानस्याभावधीविरोधित्वा-(दिति) भावः । कथं तर्हि निषेधज्ञानाकार इति पृच्छति — किन्त्विति । **रजतमिति** । स्यादित्यनुषज्यते । किं रजतत्वेन निषेधो न स्यादित्यापाद्यते, उत पारमार्थिकत्वादिना । आद्य इष्टापत्तिरित्याह — **नहीति** । द्वितीये त्वाह — **किन्त्विति** । **रजतप्रतियोगिताक इति** । निषेधधीविषय इत्यनुषङ्गः । ननु प्रतियोगिसत्त्वस्याभावविरोधित्वात् प्रातिभासिकरजतसत्त्वे तदभावासम्भव इत्याशङ्क्य प्रतियोगितावच्छेदकावच्छिन्नसत्त्वस्य तद्विरोधित्वाद्, अन्यथा मणिसत्त्व उत्तेज(क)काले दाहो न स्यात् मण्यभावस्य तत्राभावादित्याह — **लौकिकेति** । ननु पारमार्थिकत्वादेः प्रतियोग्यवृत्तित्वेन कथं प्रतियोगितावच्छेदकत्वमित्यत आह — **व्यधिकरणेति** । अतएव प्रतियोगिसमसत्ताकयोरेव विरोधित्वं, नतु प्रतियोगिसत्त्वमात्रस्य । तथाच प्रातिभासिकरजतस्य तदभावविरोधित्वेऽपि व्यावहारिकरजताभावाविरोधित्वाद् रजतनिषेध उपपद्यत इति परिहारसम्भवे व्यधिकरणधर्मभावाभ्युपगमः किमर्थ इति शिष्यदण्डनमपास्तम् । अस्यापि व्यधिकरणधर्मावच्छिन्नाभाव एव विश्रमात् । न्यायामृतकारोक्तं दोषमाशङ्कते — **नन्विति** । परोक्षस्थलेऽर्थसत्तानियमे प्रमाणाभावादर्थं विना तज्ज्ञानानुपपत्त्यभावात् । किन्तु वैशेषिकमत इवास्माकं तद्व्यवहारोपपत्तिरि-

रजतसत्त्वे तदवच्छिन्नाभावस्तत्र कथं वर्ततेति चेत् । न । पारमार्थिकत्वस्याधिष्ठाननिष्ठस्य रजते प्रतिभाससम्भवेन रजतनिष्ठपारमार्थिकत्वोत्पत्त्यनभ्युपगमात् । यत्रारोप्यमसन्निकृष्टं, तत्रैव प्रातिभासिकवस्तूत्पत्तेरङ्गीकारात् । अतएवेन्द्रियसन्निकृष्टजपाकुसुमगतलौहित्यस्य स्फटिके भानसम्भवान्न स्फटिकेऽनिर्वचनीयलौहित्योत्पत्तिः । नन्वेवं यत्र जपाकुसुमं द्रव्यान्तरव्यवधानादसन्निकृष्टं, स्फटिकमात्रं सन्निकृष्टं, तत्र लौहित्यप्रतीत्या प्रातिभासिकलौहित्यं स्वीक्रियत इति चेत् । न । इष्टत्वात् । एवं प्रत्यक्षभ्रमान्तरेष्वपि प्रत्यक्षसामान्यलक्षणानुगमो यथार्थप्रत्यक्षलक्षणासद्भावश्च दर्शनीयः ।

उक्तं प्रत्यक्षं प्रकारान्तरेण द्विविधम् । इन्द्रियजन्यं तदजन्यं चेति । तत्रेन्द्रियाजन्यं सुखादिप्रत्यक्षम् । मनस इन्द्रियत्वनिरासात् । इन्द्रियाणि पञ्च घ्राणरसनचक्षुःश्रोत्रत्वगात्मकानि । सर्वाणि चेन्द्रियाणि स्वस्व-

---

त्यपरोक्षावभासस्येत्युक्तम् । तात्कालीनेति । तद्देशीयेत्यपि बोध्यम् । कथमिति । तत्राभावप्रमानुपपत्तेरिति भावः । अत्र रजते पारमार्थिकत्वभानान्यथानुपपत्त्या तदुत्पत्तिः कल्प्यते, उत प्रतियोगितावच्छेदकस्य प्रतियोगिवृत्तित्वनियमादिति । नाद्यः । पुरोवर्तिनिष्ठेदन्ताया रजतनिष्ठतया भानवदधिष्ठाननिष्ठस्य पारमार्थिकत्वस्यान्यथाख्यातिविधया रजतनिष्ठत्वेन भानोपपत्तेरित्याह — नेति । नेदन्तावभासस्तद्गतः किन्तु संप्रयुक्तगत एवेति वदता टीकाकारेणान्यथाख्यातेरभ्युपगमान्नापसिद्धान्त इति भावः । नान्त्यः । प्रतियोग्यवृत्तिधर्मस्यापि व्यावृत्तिप्रत्ययजनकत्वरूपावच्छेदकत्वसम्भवादिति भावः । नन्वेवं शुक्तावपि प्रातिभासिकरजतोत्पत्तिर्न स्याद् अन्यथाख्यातिविधया तद्भानसम्भवात् । तथाचापसिद्धान्त इत्यत आह— यत्रेति । तर्हि सन्निकृष्टजपाकुसुमलौहित्योत्पत्तिर्न स्यादित्यत आह— अतएवेति । भ्रमान्तरेष्विति । रज्जुसर्पभ्रमादिष्वपीत्यर्थः ।

प्रत्यक्षमिति । ज्ञानप्रत्यक्षमित्यर्थः । प्रथमे बहुवक्तव्यत्वाद् द्वितीयमुदाहरति — तत्रेति । इन्द्रियाणि षडेवेति वैशेषिका मन्यन्ते, तान् निराकरोति — इन्द्रियाणीति । मनस इन्द्रियत्वनिरासादेवेति भावः । ननु किमुक्तानीन्द्रियाणि विषयं प्राप्य प्रकाशयन्ति उताप्राप्य । नाद्यः । अनेकदूरवर्तिचन्द्रमण्डलादेरनुपलम्भप्रसङ्गात् । न द्वितीयः । अतिप्रसङ्गादित्यत आह — सर्वाणीति । चक्षुरादेः स्वच्छत्वेन शीघ्रगमनसम्भवेन चन्द्रमण्डलोपलम्भोपपत्ते-

विषयसंयुक्तान्येव प्रत्यक्षज्ञानं जनयन्ति। तत्र घ्राणरसनत्वगिन्द्रियाणि स्वस्थानस्थान्येव गन्धरसस्पर्शोपलम्भान् जनयन्ति । चक्षुःश्रोत्रे तु स्वत एव विषयदेशं गत्वा स्वस्वविषयं गृह्णीतः । श्रोत्रस्यापि चक्षुरादिवत् परिच्छिन्नतया भेर्यादिदेशगमनसम्भवात्। अत एवानुभवो भेरीशब्दो मया श्रुत इति । वीचीतरङ्गादिन्यायेन कर्णशष्कुलीप्रदेशेऽनन्तशब्दोत्पत्तिकल्पनागौरवं, भेरीशब्दो मया श्रुत इत्यादिप्रत्ययस्य भ्रमत्वकल्पनागौरवं च स्यात् । तदेवं व्याख्यातं प्रत्यक्षम् ॥

इति श्रीधर्मराजाध्वरीन्द्रविरचितायां वेदान्तपरिभाषायां
प्रत्यक्षपरिच्छेदः ॥

---

## अनुमानपरिच्छेदः ।

अथानुमानं निरूप्यते । अनुमितिकरणमनुमानम् । अनुमितिश्च व्याप्तिज्ञानत्वेन व्याप्तिज्ञानजन्या । व्याप्तिज्ञानानुव्यवसायादेस्तत्त्वेन तज्जन्यत्वाभावान्नानुमितित्वम् । अनुमितिकरणं च व्याप्तिज्ञानम् ।

---

रिति भावः । ननु श्रोत्रस्याकाशरूपत्वेन विभुत्वाद् विषयदेशगमनासम्भव इत्यत आह — **श्रोत्रस्यापीति** । तथाच विभुत्वमसिद्धमिति भावः । तत्र प्रमाणमाह — **अत एवेति** । इयता प्रबन्धेनोपपादितमर्थमुपसंहरति — **तदेवमिति** । येन कारणेनापरोक्षज्ञानस्याज्ञाननिवर्तकत्वं तेन कारणेन । एवं सविकल्पकनिर्विकल्पकादिभेदेन प्रत्यक्षं सम्प्रदायानतिक्रमणेन निरूपितमित्यर्थः ॥

इति पेद्दादीक्षितविरचितायां वेदान्तपरिभाषाप्रकाशिकायां
प्रत्यक्षपरिच्छेदः ॥

---

### अनुमानपरिच्छेदः ।

प्रथमोद्दिष्टं प्रत्यक्षं निरूप्य क्रमप्राप्तमनुमानं निरूपयितुं प्रतिजानीते — **अथेति** । प्रत्यक्षनिरूपणानन्तरमित्यर्थः । अनुमानप्रमाणलक्षणमाह — **अनुमितीति** । अनुमितिस्वरूपापरिज्ञाने तत्करणत्वेनानुमानमपि दुर्विज्ञेयमित्यनुमितिस्वरूपमाह — **अनुमितिश्चेति** । तत्त्वेन तज्जन्यत्वविव-

तत्संस्कारोऽवान्तरव्यापारः। ननु तृतीयलिङ्गपरामर्शोऽनुमितौ करणं, तस्यानुमितिहेतुत्वासिद्ध्या तत्करणत्वस्य दूरनिरस्तत्वात्। नच संस्कारजन्यत्वेनानुमितेः स्मृतित्वापत्तिः, संस्कारमात्रजन्यत्वस्य स्मृतिप्रागभावजन्यत्वस्य वा स्मृतित्वप्रयोजकतया संस्कारध्वंससाधारणसंस्कारजन्यत्वस्य तदप्रयोजकत्वात्। नच यत्र व्याप्तिस्मरणादनुमितिस्तत्र कथं संस्कारो हेतुरिति वाच्यम्। व्याप्तिस्मृतिस्थलेऽपि तत्संस्कारस्यैवानुमितिहेतुत्वात्। नहि स्मृतेः संस्कारनाशकत्वनियमः,

---

क्षायाः प्रयोजनमाह — व्याप्तिज्ञानेति। तथाच व्याप्तिज्ञानत्वावच्छिन्नकारणताप्रतियोगिककार्यताश्रयत्वापेक्षया व्याप्तिज्ञानजन्यत्वमेव लघ्विति तदेव लक्षणमस्त्विति दूषणमसमर्थं वेदितव्यम्। ध्वंसादिरादिशब्दार्थः। नानुमितित्वमिति। अन्यथा तस्याप्यनुमितित्वापत्तेरिति भावः। नन्वतीतानागतयोर्व्यभिचारान्न लिङ्गं करणमित्यत आह — अनुमितिकरणं चेति। ज्ञानं निश्चयरूपमित्यर्थः। व्यापारवद्धि करणमिति न्यायेन व्यापारं दर्शयति — तदिति। ननु विशकलि(त)स्थले व्याप्तेः पूर्वमननुभूतत्वेन तज्ज्ञानस्य संस्कारद्वारानुमितिकर(ण)त्वासम्भवात् परामर्श एव तत्करणमस्तु, नच व्यापाराभावः। क्रियायोगव्यवच्छेदस्यैव करणत्वादित्यत आह — नन्विति। तथाच विशकलितस्थलेऽन्यत्र क्लृप्तज्ञानरूपकारणाभावादनुमितेरेवासिद्धेरिति भावः। वस्तुतस्त्वव्यभिचारज्ञानमेव करणं, तच्च विशकलितस्थलेऽप्यक्षतमेवेति न कोऽपि दोष इति मन्तव्यम्। ननु स्मृतिप्रागभावजन्यत्वसिद्धौ स्मृतित्वज्ञानं तज्ज्ञाने तत्प्रागभावजन्यत्वज्ञानमित्यन्योन्याश्रय इत्यनुशयादाह — संस्कारेति। संस्कारत्वावच्छिन्नकारणताप्रतियोगिककार्यताश्रयत्वमित्यर्थः। एतच्चोपलक्षणं समानविषयसंस्कारजन्यत्वमपि स्मृतित्वप्रयोजकमिति बोद्धव्यम्। ननु लाघवात् संस्कारजन्यत्वमेव तत्प्रयोजकमस्त्वित्यत आह — संस्कारेति। नचेति। व्याप्तिस्मरणस्य संस्काराजनकत्वेन तत्संस्कारो नानुमितिहेतुरिति भावः। स्मरणजन्यसंस्काराभावेऽपि तदनुभवजन्यसंस्कारस्य तदापि सत्त्वेनानुमितिरुत्पद्यत इत्याह — व्याप्तीति। व्याप्तिस्मरणं न हेतुरिति भावः। ननु पूर्वानुभवाहितसंस्कारस्य स्मर(णा?ण)नाश्यत्वेन तदापि कथं तत्संस्कारसत्त्वमित्यत आह — नहीति। ननु संस्कारादिरूपकारणसत्त्वेऽपि पर्वतवृत्तिधूमे वह्निव्याप्यत्वाज्ञानदशायामनुमितिर्नोत्पद्यत इति तज्ज्ञानमपि कारणं, तथाचा-

स्मृतिधारादर्शनात् । नचानुद्बुद्धसंस्कारादप्यनुमित्यापत्तिः । तदुद्बोधस्यापि सहकारित्वात् । एवं चायं धूमवानितिपक्षधर्मताज्ञाने धूमो वह्निव्याप्य इत्यनुभवाहितसंस्कारोद्बोधे च सति वह्निमानयमित्यनुमितिर्भवति । ननु मध्ये व्याप्तिस्मरणं तज्जन्यं वह्निव्याप्यधूमवानयमित्यादि विशिष्टज्ञानं वा हेतुत्वेन कल्पनीयं, गौरवाद् मानाभावाच्च । तच्च व्याप्तिज्ञानं वह्निविषयकज्ञानांश एव कारणं न तु पर्वतविषयकत्वांश इति पर्वतो वह्निमानिति ज्ञानस्य वह्न्यंश एवानुमितित्वम् । न पर्वतांशे, तदंशे प्रत्यक्षत्वस्योपपादितत्वात् । व्याप्तिश्चाशेषसाधना-

---

गृहीतव्याप्तेरिव गृहीतविस्मृतव्याप्तेरपि पुंसोऽनुमानानुदयेन व्याप्तिस्मृतिरप्यनुमितिहेतुरिति तार्किका मन्यन्ते । तान् निराकरोति—एवं चेति । नत्विति । उक्तसामग्र्यां सत्यां व्याप्त्यादिस्मृतिविलम्बाभावादिति भावः । प्रामाणिकत्वाद् गौरवं न दोषायेत्याशङ्क्याह — मानाभावाच्चेति । ननु पर्वतो वह्निमानिति ज्ञानस्य पर्वतांशेऽप्यनुमितित्वं स्याद्, व्याप्तिज्ञानजन्यत्वादित्यत आह — तच्चेति । पर्वतांशेऽप्यनुमितित्वमस्त्वित्यत आह—तदंश इति । अनुमितिहेतुव्याप्तिज्ञानविषयीभूतव्याप्तिः कीदृशीत्याशङ्कायामाह — व्याप्तिश्चेति । ननु साधनाश्रये महानसादौ प्रत्येकं वह्नेराश्रितत्वाभावादिदमयुक्तमिति चेत् । न, यावत्साधनाश्रयाश्रितं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यस्य विवक्षितत्वात् । नच साधनाश्रये महानसादौ साध्यतावच्छेदकस्य वह्नित्वादेराश्रितत्वाभावादि(दमपि लक्षणं न युक्तमिति) वाच्यम् । स्वाश्रयघटितपरम्परासम्बन्धेन तस्यापि तद्वृत्तित्वात् । अत एव यज्ज्ञानं व्यभिचारज्ञानविरोधि सैव व्याप्तिरुपेया, नचाशेषसाधनाश्रयाश्रितत्वज्ञानं तद्विरोधि, प्रमेयत्वेन व्यभिचारज्ञानेऽप्यव्यभिचारज्ञानदर्शनात् । नच तादृशाश्रयाश्रितत्वप्रकारं तज्ज्ञानं तथेति नोक्तदोष इति वाच्यम् । तस्य प्रकारत्वानुपपत्तेः । तद्धि न साध्यांशे प्रकाशितुमर्हति । साध्यस्य वह्न्यादेस्तादृशाश्रयाश्रितत्वाभावात् । नापि साध्यतावच्छेदकवह्नित्वादौ, यो यो धूमवानित्युदाहरणेन वह्नित्वे तदाश्रयाश्रितत्वस्य प्रकारतयाप्रतीतेः, संसर्गमर्यादयैव तत्र तद्भानाङ्गीकारादिति ग्रन्थकृतैवोक्तव्याप्तिर्दूषितैवेति कथं सैव व्याप्तिरत्र प्रदर्शितेति दूषणमनवसरदुस्थम् । अत्रोदाहरणेन व्याप्तिग्रहानुकूलसामानाधिकरण्यमात्रस्यैव प्रतिपाद्यत्वाङ्गीकारेण व्याप्तिप्रतिपादकत्वाभावेऽपि विरोधाभावादिति । ननु व्याप्तौ गृहीतायामेव धूमो-

श्रयाश्रितसाध्यसामानाधिकरण्यरूपा । सा च व्यभिचारादर्शने सति सहचारदर्शनेन गृह्यते । तच्च सहचारदर्शनं सकृद्दर्शनं भूयोदर्शनं वेति विशेषोऽनादरणीयः । सहचारदर्शनत्वस्यैव प्रयोजकत्वात् ।

तच्चानुमानमन्वयिरूपमेकमेव, नतु केवलान्वयि । सर्वस्यापि धर्मस्यास्मन्मते ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वेनात्यन्ताभावाप्रतियोगिसाध्यकत्वरूपकेवलान्वयित्वस्यासिद्धेः । नाप्यनुमानस्य व्यतिरेकिरूपत्वं, साध्याभावे साधनाभावनिरूपितव्याप्तिज्ञानस्य साधनेन साध्यानुमितावनुपयोगात् । कथंतर्हि धूमादावन्वयव्याप्तिमविदुषोऽपि व्यतिरेकव्याप्तिज्ञानादनुमितिः, अर्थापत्तिप्रमाणादिति वक्ष्यामः । अत

---

ऽग्निमनुमापयति नान्यथा । तथाच व्याप्तिग्राहकं किं भूयोदर्शनमुत सकृद् दर्शनम् । नाद्यः, शतशः सहचरितयोरपि पार्थिवत्वलोहलेख्यत्वयोर्व्याप्त्यग्रहात् । न द्वितीयः, वह्नावपि धूमनिरूपितव्याप्तिग्रहप्रसङ्गादित्यत आह—**सा चेति** ।

अत्रोक्तलक्षणलक्षितमनुमानं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् त्रिविधमिति तार्किकाः कल्पयन्ति । तन्मतं दूषयति — **तच्चैवेति** । एवकारव्यावर्त्यमाह—**न त्वित्यादिना** । यद्यपि सर्वपदार्थवृत्तित्वं केवलान्वयित्वं, तत्साध्यकत्वं केवलान्वयिलिङ्गलक्षणमित्युक्ते न दोषः, तथापि पराभिमतकेवलान्वयिसाध्यकत्वेनानुमानभेदो न सम्भवतीत्यत्र तात्पर्यम् । यद्वा अस्तूक्तप्रकारेण केवलान्वयिलक्षणं, तथापि नानुमानभेदः । अन्वयित्वमात्रेणापि स्वसाध्यगमकत्वसम्भवात् । अन्यथा वह्नित्वाद्यवच्छिन्नसाध्यकत्वभेदादप्यनुमानभेदापत्तेः । तथा सत्यनुमानानन्त्यं स्यादिति भावः । **अनुपयोगादिति** । अन्यव्याप्तिज्ञानस्यान्यत्राहेतुत्वादिति भावः । नचान्वयव्याप्तिज्ञानस्य (स ? स्व) व्यभिचारज्ञानविरोधिज्ञानत्वेनानुमितिहेतुतया व्यतिरेकव्याप्तिज्ञानमपि हेतुरेवेति वाच्यम् । लाघवेन व्याप्तिज्ञानत्वेनैव तस्य हेतुतया गौरवेणोक्तरूपेण हेतुत्वाभावात् । व्यतिरेकव्याप्तिव्यतिरेकज्ञानेऽपि शब्दादिनान्वयव्याप्तिज्ञानेऽनुमितिदर्शनाच्च । व्यतिरेकव्याप्तिज्ञानेऽप्यन्वयव्याप्तिज्ञानमात्रेणानुमितिसम्भवाच्चेति भावः । नन्वन्वयव्या(प्ति ? प्त्य)ज्ञानदशायां व्यतिरेकव्या(प्त्य ? प्ति)ज्ञानादनुमितिदर्शनेनान्वयव्याप्तिज्ञानमपि न हेतुरित्याशङ्कते — **कथमिति** । **प्रमाणादिति** । वह्न्यादिसिद्धिरिति शेषः । अतः शब्दार्थमाह — **व्यतिरेकेति** ।

**एवानुमानस्य नान्वयिव्यतिरेकिरूपत्वं, व्यतिरेकव्याप्तिज्ञानस्यानुमित्यहेतुत्वात् ।**

**तच्चानुमानं स्वार्थपरार्थभेदेन द्विविधम् । तत्र स्वार्थं तूक्तमेव । परार्थं तु न्यायसाध्यम् । न्यायो नामावयवसमुदायः । अवयवाश्च त्रय एव प्रतिज्ञाहेतूदाहरणरूपाः । उदाहरणोपनयनिगमनरूपा वा । नतु पञ्चावयवाः । अवयवत्रयेणैव व्याप्तिपक्षधर्मतयोरुपदर्शनसम्भवेनावयवद्वयस्य व्यर्थत्वात् । एवमनुमाने निरूपिते ब्रह्मभिन्ननिखिलमिथ्यात्वसिद्धिः । तथाहि — ब्रह्मभिन्नं सर्वं मिथ्या ब्रह्मभिन्नत्वात् । यदेवं तदेवं यथा शुक्तिरूप्यम् । नच दृष्टान्तासिद्धिः । तस्य साधितत्वात् ।**

---

प्रकारान्तरेणानुमानं विभजते — तच्चेति । स्वयं बुद्ध्वा पश्चात् परो बोधनीय इति स्वार्थस्य प्रथममुद्देशः । अनन्तरं परार्थस्येति । **स्वार्थमिति** । स्वस्यानुमितिरूपप्रयोजनं यस्माद् व्याप्तिज्ञानाद् भवति तदित्यर्थः । **उक्तमिति** । उक्तप्रायमित्यर्थः । परस्यानुमितिरूपप्रयोजनं यस्माद् भवति तदित्यभिप्रेत्य तयोर्भेदमाह — **परार्थमिति** । **अवयवा इति** । तदुक्तं भट्टपादैः ।

"त्रीनुदाहरणान्तान् वा यद्वोदाहरणादिकान् ।"

इति । एवं निरूपितस्यानुमानस्य प्रयोजनमाह — **एवमिति** । **ब्रह्मभिन्नेति** । ब्रह्मभिन्नाशेषप्रपञ्चस्य मिथ्यात्वसिद्धिरित्यर्थः । ननु किं ब्रह्मभिन्नत्वमात्रं पक्षतावच्छेदकम्, उत ब्रह्मज्ञानेतराबाध्यत्वविशेषितम् । नाद्यः, शुक्तिरूप्यादौ सिद्धसाधनात् । पक्षतावच्छेदकसामानाधिकरण्येन प्रागेव साध्यसिद्धेः । न द्वितीयः । ब्रह्मज्ञानाव्यवहितभ्रमे सिद्धसाधनादित्यत आह— **तथाहीति** । तथा च पक्षतावच्छेदकावच्छिन्ने साध्यसिद्धेरुद्देश्यत्वात् तदसिद्धेर्न प्रातिभासिकरजतादौ सिद्धसाधनमिति भावः । वस्तुतस्तु ब्रह्मज्ञानेतरबाध्यत्वायोग्यत्वस्य पक्षविशेषणत्वेन प्रातिभासिकरजतादेश्च तद्योग्यत्वान्न सिद्धसाधनमिति ध्येयम् । ब्रह्मणः पक्षत्वेंऽशतो बाधः स्यादिति ब्रह्मभिन्नमित्युक्तम् । **शुक्तिरूप्यमिति** । आरोपितरजतमित्यर्थः । **तस्येति** । दृष्टान्ते मिथ्यात्वस्य प्रत्यक्षपरिच्छेदे साधितत्वादिति भावः । ननु प्रातिभासिकरजतत्वादिकमेव दृष्टान्ते मिथ्यात्वप्रयोजकं, नतु ब्रह्मभिन्नत्वमित्याशङ्कयाह — **नचेति** । ब्रह्मभिन्नत्वस्य सकलभ्रमसाधारणत्वादिति भावः । *(एतच्चोपलक्षणं विपक्षे च दृग्दृश्ययोः सम्बन्धानुप-

---

* कुण्डलितांशोऽनन्वितो लेखकप्रमादादायात इति भाति ।

पत्तिरपि बाधिका। नचाद्वैतमते वृत्तेर्घटादिना य एव सम्बन्धः स एव वृत्तिरपद्ययोः परमतेऽपीति वाच्यम्। अघटितघटनापटीयस्त्वान्मायायास्तत एव सर्वव्यवहारोपपत्तेः। प्रतिकर्मव्यवस्थाश्रयस्य परप्रक्रियानिराकरणमात्रपरत्वम्। न हि स्वप्नघटादिसाक्षात्कारेऽपि आद्यभानप्रयोजकं घटसन्निकर्षजन्यत्वादिकं बहिर्निःसृतान्तःकरणवृत्त्यभिव्यक्तभिन्नत्वं वा नियामकमस्ति। नच परकृताक्षेपे सर्वत्रेदमेवोत्तरं देयं स्यादिति वाच्यम्। उपायान्तरस्योपायान्तरादूषकत्वात्। अत एव 'यद् यथा प्रतीयते तत् तथैवेत्यभ्युपगमाच्च मायावादिनं प्रति नैतच्चोद्यमवतरती'ति तत्त्वदीपनवचनं सङ्गच्छते। अत एव च 'आवरणस्यानिरूपिताकारता च युक्ते'ति 'अनुपपत्तेरलङ्कारत्वादि'ति च तार्किकसार्वभौमविचारणाचार्यवचनम्) ननु किमिदं मिथ्यात्वम्। अत्यन्तासत्त्वं वा, अनिर्वचनीयत्वं वा, सद्विविक्तत्वं वा, सत्त्वानधिकरणत्वं वा, प्रमित्यविषयत्वं वा, भ्रान्तिविषयत्वं वा, भ्रान्तिमात्रविषयत्वं वा, अध्यस्ततया भ्रान्तिमात्रत्वं वा, बाधकज्ञानविषयत्वं वा, नास्ति नासीन्नेह भविष्यतीति बोध्यमानाभावप्रतियोगित्वेन तद्विषयत्वं वा, ज्ञानत्वगर्भधर्मावच्छिन्नकारणतानिरूपितकार्यताधिकरणनिवृत्तिप्रतियोगित्वं वा, प्रमाणज्ञानत्वगर्भधर्मावच्छिन्नकारणतानिरूपितकार्यताधिकरणनिवृत्तिप्रतियोगित्वं वा, अत्यन्ताभावप्रतियोगित्वं वा, स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं वा, एकावच्छेदेन स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं वा, अविद्यातत्कार्ययोरन्यतरत्वं वा। नाद्यः। अपसिद्धान्तात्। न द्वितीयः। अप्रसिद्धेः। न तृतीयः। सतोऽपि सदन्तरविविक्तत्वात्। न चतुर्थः। निर्धर्मके ब्रह्मण्यपि सत्त्वात्। नच निर्धर्मकत्वादेव तत्र सत्त्वानधिकरणत्वमपि नेति वाच्यम्। निर्धर्मकत्वरूपहेतोः सत्त्वानधिकरणत्वाभावरूपसाध्यस्य च भावाभावाभ्यां व्याघातेनाभावरूपधर्मनिषेधायोगात्। न पञ्चमः। शुक्तिरूप्यादेरपि व्यवसायद्वारा व्यवसायं प्रति साक्षाद्बाधकज्ञानं प्रत्यपि निषेध्यत्वेन विषयतया दृष्टान्तासिद्धेः। नापि षष्ठः। ब्रह्मणोऽप्यधिष्ठानत्वेन भ्रान्तिविषयत्वात्। नापि सप्तमः। शुक्तिरूप्यादेरपि बाधकज्ञानविषयत्वेन तन्मात्रविषयत्वाभावात्। नाष्टमः। विशेष्यवैयर्थ्याद् विशेषणमात्रस्य मिथ्यात्वसम्भवात्। नच तदप्यप्रसिद्धेरित्युक्तत्वात्। न नवमः। ब्रह्मणोऽपि निषेधाधिष्ठानत्वेन बाधकज्ञानविषयतया तत्रातिव्याप्तेः। न दशमः। आवरण(स्वरूप्य ? स्वरूप)स्यैव तव मते तत्प्रतियोगित्वात्। नाप्येकादशः। उत्तरज्ञाननिवर्त्यपूर्वज्ञानादा-

नचाप्रयोजकत्वं, शुक्तिरूप्यरज्जुसर्पादीनां मिथ्यात्वे ब्रह्मभिन्नत्व-स्यैव लाघवेन प्रयोजकत्वात् । मिथ्यात्वं च स्वाश्रयत्वेनाभिमतयाव-द्वस्तुनिष्ठात्यन्ताभावप्रतियोगित्वम् । अभिमतपदं वस्तुतः स्वाश्रया-प्रसिद्ध्यासम्भववारणाय । यावत्पदमर्थान्तरवारणाय । तदुक्तं

"सर्वेषामपि भावानां स्वाश्रयत्वेन सम्मते ।
प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता ॥"

इति । यद्वा अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगि । पटत्वात् पटान्तरवदित्यनुमानं मिथ्यात्वे प्रमाणम् । तदुक्तम्

"अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः ।
अंशित्वादितरांशीव दिगेषैव गुणादिषु ॥"

---

विव सत्यत्वोपपत्तेः । अत एव न द्वादशः । नापि त्रयोदशः । घटादेरत्यन्ता-भावप्रतियोगित्वेऽपि सत्यत्वे विरोधाभावात् । न चतुर्दशः । संयोगतदभावयो-र्वृक्षे सामानाधिकरण्येऽपि तयोः सत्यत्वाभ्युपगमात् । नापि पञ्चदशः । शुक्ति-रूप्यादौ तदभावादित्युक्तत्वात् । नापि षोडशः । अनादौ जीवब्रह्मभेदेऽव्याप्तेः । तस्माद् मिथ्यात्वानिर्वचनात् साध्याप्रसिद्धिरित्याशङ्क्याह—मिथ्यात्वं चेति । अत्र चैकावच्छेदेनेति विशेषणम(भा ? न।)देयं, तथाच शुक्तिरूप्यस्य मि-थ्यात्वं साधितमेवेति भावः । असम्भवेति । पटादेस्तन्तुवृत्तितयोपलभ्य-मानत्वादिति भावः । अर्थान्तरेति । घटादेः सत्यत्वेऽपि भूतलादिनिष्ठात्यन्ता-भावप्रतियोगित्वसम्भवादिति भावः । चित्सुखाचार्यसम्मतिमाह—तदुक्तमिति । सर्वेषां भावानां मृषात्मता मिथ्यारूपता । स्वाश्रयत्वेनाभिमतात्यन्ताभावं प्रति प्रतियोगित्वमिति योजना । सर्वप्रपञ्चपक्षीकारेण मिथ्यात्वं प्रसाध्य प्रत्येकपक्षीका-रेणाप्याह—यद्वेति । एतत्पटस्य तन्त्वन्तरनिष्ठात्यन्ताभावप्रतियोगित्वाभ्युपगमे-नार्थान्तरवारणाय एतदित्युक्तम् । तेषामेव सम्मतिमाह — तदुक्तमिति । अं-शिनः । अवयविनः । स्वावयवनिष्ठात्यन्ताभावप्रतियोगिन इति साध्यम् । अं-शित्वादिति हेतुः । इतरांशीव इतरावयवीवेति दृष्टान्तः । उक्तन्यायमवयवि-भिन्नेषु गुणादिष्वप्यतिदिशति — दिगेषैवेति । गुणादिष्वप्ययमेव मार्ग इति श्लोकार्थः । ननूभयमतेऽपि कार्यकारणयोरभेदेन कार्य(स्य) कारणानाश्रितत्वेन तत्साधने सिद्धसाधनं स्यात् । ब्रह्मवदवृत्तित्वेन घटादिवदन्यवृत्तित्वेन वोपपत्त्या-

**इति । नच घटादेर्मिथ्यात्वे सन् घट इति प्रत्यक्षेण बाधः । अधिष्ठान-ब्रह्मसत्ताया एव तत्र विषयतया तत्र घटादेः सत्यत्वासिद्धेः । नच.**

---

र्थान्तरत्वाच्च । किं चायमभावः प्रामाणिको वा, अप्रामाणिको वा । नाद्यः । अद्वैतहान्यापत्तेः । न द्वितीयः । रजते सीसभ्रमानन्तरं न रजतमिति रजते रजतत्वप्रतिषेधे प्रातिभासिकात्यन्ताभावप्रतियोगिनोऽपि रजतत्वस्यामिथ्यात्वे-नार्थान्तरत्वप्रसङ्गात् सिद्धसाधनाच्चेति चेत् । तदरमणीयम् । किमेतन्नैयायि-कस्य चोद्यम्, उत मध्वमतानुसारिणः । नाद्यः । तेषां मते कार्यकारणयोरत्य-न्तभेदाङ्गीकारेण तं प्रत्युक्तानुमानसम्भवात् । द्वितीयेऽपि किं कार्यकारणयोर-भेदस्तात्त्विकः, उत काल्पनिकः । नाद्यः । तात्त्विकाभेदाङ्गीकारे तयोः कार्य-कारणभावाभावप्रसङ्गाद्, एकस्य पौर्वापर्याभावात् । न द्वितीयः । तथा सति गले पादुकान्यायेन मिथ्यात्वाङ्गीकारप्रसङ्गात् । ननुतर्हि तवापि मते कथं कार्य-कारणयोरभेदेन व्यवहार इति चेत् । (न ?) श्रूयतामवधानेन, न हि वयं कार्य-कारणयोरैक्यमेवाभेदार्थं ब्रूमः । किन्तु कारणव्यतिरेकेण कार्याभावमिति । तथैवाहुराचार्यवाचस्पतयः 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यत्र — 'न खल्वनन्यत्वमित्यभेदं ब्रूमः । किन्तु भेदं व्यासेधामः' इति । यत्तु ब्रह्मवदि-त्यादि, तन्न । स्वाश्रयाभिमतानामाश्रयत्वस्य विवक्षितत्वेनाश्रितत्वायोगादन्या-श्रितत्वासम्भवाच्चान्याकारत्वाभावादव्यापकत्वाच्च नियमतस्तयोरप्राप्तेः । यदपि किञ्चेत्यादि । तदपि न । ब्रह्मज्ञानेतराबाध्यत्वरूपप्रामाणिकत्वस्य तत्रापि सम्भवात् । अभावानां ब्रह्मण इव प्रामाणिकत्वेऽपि सदद्वैताव्याकोपादित्यपि केचित् । नन्वस्यानुमानस्य मिथ्यात्वं किमनुमानान्तरेण सिध्यति किं वानेना-नुमानेन । आद्य अनवस्था । तस्यानुमानस्य मिथ्यात्वसाधनेऽनुमानान्तरापेक्ष-णात् । नच जिज्ञासायां सत्यां तदनुमानप्रवृत्तेर्नानवस्था मूलक्षयकरीति वा-च्यम् । यद् यदुक्तसाधनं तत्तदुक्तसाध्यमिति व्याप्तिग्रहणसमये तस्य तस्या-नुमानस्य मिथ्यात्वानवगमे सर्वोपसंहारवती व्याप्तिर्न सिध्येत् । अधिगमे च तत्तदधिगमा(दा ?)य तत्तदनुमानान्तरं तदैवापेक्षणीयमिति कथं न मूलक्षतिः । न द्वितीयः, स्वात्मवृत्तित्वविरोधात् । स्वगतमिथ्यात्वस्य स्वेनैवाग्रहणादिति चेत् । नैतत् सारं, शब्दशब्दवत् प्रपञ्चसत्यत्वानुमानवदध्ययनविधिवच्चाविरो-धादित्यलमतिप्रसङ्गेन । मिथ्यात्वानुमाने बाधमाशङ्क्य निराकरोति — **नचेति।**

**नीरूपब्रह्मणः कथं चाक्षुषादिज्ञानविषयतेति वाच्यम्। नीरूपस्यापि रूपादेः प्रत्यक्षविषयत्वात्। नच नीरूपस्य द्रव्यस्य चक्षुराद्ययोग्यत्वनियमः, मन्मते ब्रह्मणो द्रव्यत्वासिद्धेः। गुणाश्रयत्वं समवायिकारणत्वं वा द्रव्यत्वमिति तेऽभिमतम्। न हि निर्गुणस्य ब्रह्मणो गुणाश्रयता। नापि समवायिकारणता, समवायासिद्धेः।**

---

**ब्रह्मसत्ताया एवे**ति। नच सत्ताजातिरेव तत्र विषयोऽस्तु न ब्रह्मचैतन्यमिति वाच्यम्। सन् समवायः सती जातिरित्यादौ जात्यभावेऽपि सत्ताप्रत्ययदर्शनेन चैतन्यसत्ताया एव तत्र विषयतया वक्तव्यत्वात्। नचोपाधिरूपसत्ता तत्र विषय इति वाच्यम्। अनुगतसत्तासम्भवेऽननुगतसत्ताकल्पनानवकाशाद्, उपाधिनैव घटादौ सत्ताव्यवहारोपपत्तौ जातिकल्पनासम्भवाच्चेति भावः। किं प्रत्यक्षमात्रे रूपवत्त्वम्, उत द्रव्यप्रत्यक्षे। नाद्य इत्याह — **नीरूपस्ये**ति। द्वितीयमनूद्य दूषयति — **नचे**ति। घटादिवद् ब्रह्मणोऽपि द्रव्यत्वमास्तामित्यत आह — **गुणाश्रयत्वमि**ति। अस्त्वेवं, ततः किमित्यत आह — **न ही**ति। **निर्गुणस्ये**ति। नन्वात्मनो निर्गुणत्वे किं मानम्। न तावत् प्रत्यक्षम्, असिद्धेः। नचात्मत्वं निर्गुणत्वसमानाधिकरणम्, आत्मत्वगुणत्वातिरिक्ताप्रतियोगिकाभावप्रतियोगिकाभावप्रतियोगित्वाद् गुणत्ववदित्यनुमानं मानमिति वाच्यम्। अत्राश्रयाद्यसत्त्वेऽसिद्धेः। तत्सत्त्वे तत एव सगुणत्वापाताद्, गुणत्वस्यापि प्रमेयत्वाद्यधिकरणाधिकरणत्वेन साध्यवैकल्याच्च। नापि धर्मत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकं, धर्मत्वाद् गोत्ववदित्यनुमानम्। तस्य प्रामाण्ये ब्रह्मणोऽभावमादाय सगुणत्वप्रसङ्गात्। अभावस्याधिष्ठानात्मकत्वे साध्यस्य बाधात्। नापि 'निर्गुणः' इत्यादिवाक्यं मानम्। सत्यकामादिवाक्यानुसारेण तस्य हेयगुणनिषेधपरत्वात्। यथा 'अग्नीषोमीयं पशुमालभेते'तिवाक्यविहितहिंसाव्यतिरिक्तहिंसानिषेधपरता 'न हिंस्यादि'त्यादिवाक्यानाम्। अत एव

"समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्।"

इति स्मृतिः। अत एव निर्गुणवाक्यगतगुणपदस्य हेयगुणे लक्षणा स्यादित्यपास्तम्। 'न हिंस्यादि'त्यादौ हिंसापदस्य लाक्षणिकत्वदर्शनेनेष्टापत्तेः। अत एवाद्वितीयादिवाक्यमपि न मानमिति पूर्वः पक्षः।

सिद्धान्तस्तु धर्मत्वमात्मनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकं घटत्वधर्मत्वे इति प्रमाविशेष्यत्वाद्, घटत्ववत्। नचात्यन्ताभावमादाय सधर्मकत्वापत्तिः।

अत्यन्ताभावस्य ब्रह्मरूपत्वाङ्गीकारात् । नचैवमात्मनिष्ठत्वाभावाद् बाधः । ब्रह्मणि ब्रह्मेत्यप्रतीत्या ब्रह्मत्वेन ब्रह्मणः स्वावृत्तित्वेऽपि ब्रह्मणि प्रपञ्चो नेति प्रपञ्चाभावत्वेन स्वस्य स्ववृत्तित्वाविरोधात् । अत एव काले काल इति प्रतीत्य-भावेन देशत्वेन कालस्य साधारत्वाभावेऽपीदानीं काल इति प्रतीत्या कालस्य कालत्वेन स्ववृत्तित्वाभ्युपगमः । अत एव च घटे घट इति प्रतीत्यभावेन घटस्य घटत्वेन घटानाधारत्वेऽपि घटोऽभावभिन्न इति प्रतीत्या घटस्य भेदत्वेन रूपेण स्ववृत्तित्वाभ्युपगमः । अत्र विपक्षे धर्मब्रह्मणोः सम्बन्धानुपपत्तिर्बा-धिका । संयोगस्य द्रव्यमात्रवृत्तित्वात् । समवायस्य च दूषितत्वात् । कथं तर्हि निर्गुणस्य संसारः । न कथंचित् ।

"तस्मादद्वैतमेवास्ति न प्रपञ्चो न संसृतिः ।"

इति श्रुतेः । तर्हि तत्त्वज्ञानात् किं निवर्तत इति चेद् विभ्रम इति ब्रूमः । वि-भ्रमो वा कथं निर्गुण इति चेद्, भावरूपाज्ञानादित्यवेहि । नच स्वयम्प्रकाशे ब्रह्मण्यज्ञानसम्बन्धो न सम्भवतीति वाच्यम् । पेचकारोपितान्धकारस्य सौरा-लोकविरोधित्वादर्शनेन समसत्ताकप्रकाशतमसोरिव विरोधित्वकल्पनेन पारमा-र्थिके ब्रह्मण्यारोपिताज्ञानसम्भवे विरोधाभावादिति । एव निर्गुणश्रुतिरपि मानम् । नच 'न हिंस्यादि'ति न्यायः, तत्राग्नीषोमीयपशुहिंसावत् सगुणस्य क्वचिदपि तात्पर्याविषयत्वेन वैषम्यात् । वेदप्रतिपाद्यतामात्रेण सामान्यविशेषन्यायाभ्युप-गमे रामायणभारतादिसिद्धदुःखशोकविशेषानुसारेण समस्तहेयरहितमित्यस्यापि हेयविशेषनिषेधपरतापत्तौ निखिलहेयप्रत्यनीकत्वासिद्धिप्रसङ्गात् । नच गुणानां तात्पर्याविषयत्वे तत्प्रतिपादनवैषम्यम् । उपासनाप्रकरणपठितानामुपास्यगुण-समर्पकत्वेन, निर्गुणब्रह्मप्रकरणपठितानां प्रतियोगिसमर्पकत्वेन च विनियोगात् । नच 'न कलञ्जं भक्षयेदि'त्यादाविव निषेधवाक्यगतपदानामेव प्रतियोगिसमर्प-कत्वसम्भवे पृथक् प्रतियोगिप्रतिपादनं व्यर्थमिति वाच्यम् । 'अनाहुतिर्वै जर्ति-लाश्च गवीधुकाश्चे'त्यादौ निषेध्यस्य जर्तिलादिहोमस्य 'जर्तिलयवाग्वे'त्यादिना प्रतिपादनदर्शनात् । 'न तत्र रथा न रथयोगा' इत्यादौ निषेध्यस्य रथादेः 'अथ रथान् रथयोगान्' इति वाक्यप्रतिपादनदर्शनाच्च । नच सर्वशब्दाना-मसति प्रवृत्तिनिमित्ते अप्रवृत्तेर्ब्रह्मणः शब्दाप्रतिपाद्यतैव स्यादिति वाच्यम् । क्वचिदारोपितस्य क्वचिद् ब्रह्मस्वरूपस्यैव गुणाद्यभावस्य तथात्वसम्भवात् । नच 'यतो वे'त्यादिज्ञेयब्रह्मपरे वाक्ये 'तद् विजिज्ञासस्वे'ति जगद्धेतुत्वविशिष्टस्यैव

**अस्तु वा द्रव्यत्वं ब्रह्मणः । तथापि नीरूपस्य कालस्येव चाक्षुषादिज्ञानविषयत्वे न विरोधः । यद्वा त्रिविधं सत्त्वम् । पारमार्थिकं सत्त्वं ब्रह्मणः । व्यावहारिकं सत्त्वमाकाशादेः, प्रातिभासिकं सत्त्वं शुक्तिरूप्यादेः । तथाच घटः सन्निति प्रत्यक्षस्य व्यावहारिकसत्त्वविषयत्वेन प्रामाण्यम् । अस्मिन् पक्षे च घटादेर्ब्रह्मणि निषेधो न स्वरूपेण ।**

---

जिज्ञास्यतोक्ता, तत्पदस्य पूर्वोक्ताशेषपरत्वादिति वाच्यम् । तथा सति यत्तदोर्भिन्नार्थतापत्तेः । न हि यत इत्यस्य यतः प्रातिपदिकस्य जगद्धेतुत्वविशिष्टचैतन्यवाचिता । तथा सति पञ्चमीवैयर्थ्यापत्तेः । किन्तु चैतन्यमात्रम् । तथाच यथा (यः) स्वप्ने गजाद्यनेकपदार्थानन्वभू(वं ? त् तं) पश्येदित्यादौ, योऽर्जुनो द्रोणभीष्मादीन् जिगाय तं सेवस्वेत्यादौ च तत्पदेन धर्मिमात्रस्य परामर्शः । नतु पूर्वोक्ताशेषगुणविशिष्टस्य, तथात्रापि तत्पदं ब्रह्ममात्रपरम् । अत एव चेमामेव शङ्कां व्यावर्तयितुं मुण्डके द्युभ्वाद्यायतनं ब्रह्म प्रकृत्य 'तमेवैकं जानथ आत्मानमि'ति विशेषणनिरासपूर्वकं विशेष्यस्य ब्रह्मण एव ज्ञेयत्वमुक्तमित्यलमधिकेन ।

ननु सिद्धान्ते कल्पितगुणाङ्गीकारेण कल्पितद्रव्यत्वमप्यङ्गीक्रियतां, को विरोधः । अन्यथा जगन्मात्राधिष्ठानत्वं न स्यादित्यत आह— अस्तु वेति । एतच्चोपलक्षणम् । घटादिवत् तद्गतरूपस्यापि ब्रह्मणि कल्पितत्वेन चाक्षुषत्वाविरोधात् । अत एव ब्रह्मणः सर्वेन्द्रियग्राह्यत्वम् । वेदैकसमधिगम्यत्वं तु आकारान्तरेणेति न विरोध इत्यपि बोध्यम् । ननूक्तप्रकारेण सर्वप्रपञ्चस्यापि मिथ्यात्वे कर्मप्रतिपादकज्योतिष्टोमादिवाक्यानामप्रामाण्यप्रसङ्गाद् मिथ्यार्थप्रतिपादकत्वाद्, अग्निना सिञ्चेदिति वाक्यवत्, इष्टापत्तौ 'तत्सामान्यादितरेषु तथात्वमि'ति न्यायेन वेदैकदेशाप्रामाण्ये वेदान्तानामप्यप्रामाण्यप्रसङ्गादित्याशङ्क्य कर्मणां व्यावहारिकसत्यत्वाङ्गीकारान्न दोष इत्याशयेनाह— यद्वेति । पारमार्थिकत्वमिति कालत्रयाबाध्यत्वमित्यर्थः । व्यावहारिकसत्त्वं संसारदशायामबाधितत्वमित्यर्थः । प्रातिभासिकत्वं तत्कालेऽपि बाध्यत्वम् । सन् घट इति व्यवहारं समर्थयति— तथाचेति । अद्वैतागमवाक्यवत् तत्त्वावेदकत्वानङ्गीकारेऽपि व्यावहारिकतत्त्वावेदकत्वाङ्गीकारात् प्रत्यक्षादेः प्रामाण्यम् । तदुक्तं —

"प्रत्यक्षादिप्रमाणानां प्रामाण्यं व्यावहारिकम् ।
अद्वैतागमवाक्यं तु तत्त्वावेदनलक्षणम् ॥"

इति भावः । ननु घटादेर्व्यावहारिकत्वाङ्गीकारे 'नेह नानास्ति किंचने'ति

**किन्तु पारमार्थिकत्वेनैवेति न विरोधः। अस्मिन् पक्षे च मिथ्यात्व-लक्षणे पारमार्थिकत्वावच्छिन्नप्रतियोगिकत्वमत्यन्ताभावविशेषणं द्रष्ट-व्यम्। तस्मादुपपन्नं मिथ्यात्वानुमानमिति॥**

इति श्रीधर्मराजाध्वरीन्द्रविरचितायां वेदान्तपरिभाषायाम्
अनुमानपरिच्छेदः॥

---

ब्रह्मणि स्वरूपेण निषेधो न स्यादित्यत आह — **अस्मिन्निति**। नन्वस्मिन् पक्षे घटादेर्मिथ्यात्वं न स्यात्। (तत्त्वादौ?) तस्य व्यावहारिकप्रमाणसिद्धत्वेन प्रति-योगिसत्त्वस्याभावविरोधितया घटाभावस्य तत्राभावादित्यत आह — **अस्मिन् पक्षे चेति**। एकावच्छेदेन स्वाश्रयत्वाभिमतयावन्निष्ठपारमार्थिकत्वावच्छिन्नात्य-न्ताभावप्रतियोगित्वं मिथ्यात्वमिति पर्यवस्यति। एतच्चोपलक्षणम्। सत्त्वाव-च्छिन्नप्रतियोगिकभेदवत्त्वं वा। प्रमाणज्ञानत्वगर्भधर्मावच्छिन्नकारणताप्रतियोगि-कार्यताश्रयनिवृत्तिप्रतियोगित्वं वेत्यादिकं मिथ्यात्वलक्षणं बोध्यम्। नच भेद-घटितलक्षणस्य ब्रह्मण्यतिव्याप्तिरिति वाच्यम्। अधिष्ठानताप्रयोजकसम्बन्धाति-रिक्तसम्बन्धेन भेदवत्त्वस्य विवक्षितत्वात्। अन्यथा शब्दसमवेतत्वादीनां गग-नलक्षणानां कालेऽतिव्याप्तिः स्यादिति। असतोऽसत्त्वादेव नातिव्याप्तिः। ननु 'मृत्तिकेत्येव सत्यमि'त्यादिवाक्यात् प्रपञ्चस्य सत्यत्वावगमेन मिथ्यात्वानुमानं बाधितम्। किञ्च, प्रपञ्चो न मिथ्या वृत्तिवेद्यत्वाद् ब्रह्मवदिति सत्प्रतिपक्षितं चेति शङ्कामुपसंहारव्याजेन निराकरोति—**तस्मादिति**। तथाच दृष्टान्तस्य कारण-व्यतिरिक्तकार्याभावप्रतिपादनपरत्वाद्, बहुश्रुत्यादिमूलत्वेन मिथ्यात्वानुमानस्य बलवत्त्वाच्च न बाधसत्प्रतिपक्षाविति भावः। ननु प्रपञ्चमिथ्यात्वे श्रुतिं न पश्याम इति चेत्, न। तथाहि—'नेह नानास्ती'ति श्रुतिस्तावन्मानम्। नच ब्रह्मणि नानात्वं निषिध्यत इति वाच्यम्। नानाशब्दस्य नानात्वपरत्वे मुख्यार्थहाना-पत्तेः। 'एकमेवाद्वितीयमि'त्यपि मानम्। नच '(न) तत्समो नाप्यधिकश्च दृश्यते' इति वचनात् तुल्यनिषेधपरत्वमिति वाच्यम्। सामान्यनिषेधस्य विशेषाभावपरत्वे हिंसाप्रतिषेधस्यापि 'ब्राह्मणो न हन्तव्यः' 'श्रोत्रिया न हन्तव्याः' इत्यादिनिषेध-विषयत्वापत्तेः। यदि च तत्र तथा सति लक्षणापत्तिस्तदा प्रकृतेऽपि तुल्यम्। 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदि'ति श्रुतिरपि मानम्। नचैषां मते 'सर्वमात्मैवाभूदि'ति मायावादमनूद्य 'तत् केन कमि'त्यादिना दूषणं

तत्रोपन्यस्यत इति वाच्यम् । अभूदिति सिद्धवदनुवादो न स्यात् । दूषणपरत्वे 'आकाश आनन्दो न स्यात्' 'असद् ब्रह्मेति वेद चेदि'तिवद् अभविष्यदित्यादिनिर्देशापत्तेः । 'सदेव सोम्येदमग्र आसीत्',

"मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।"

"यस्मात् परं नापरमस्ति किञ्चिदि"त्याद्युपनिषद्वचनमपि प्रमाणम् ।

"यदिदं दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥

ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्ति भ्राम्यन्तो मोहसंप्लवे ॥
ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत्
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ! ॥"

इति विष्णु(पुराण)वचनात् ।

"प्रत्यक्षेणानुमानेन निगमेन तु संविदा ।
आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह ॥"

इति श्रीभागवतोक्तेश्च ।

"यथा स्वप्ने मुहूर्तः स्यात् संवत्सरशतभ्रमः ।
तथा मायाविलासोऽयं ज्ञायते जाग्रति भ्रमः ॥"

इति वासिष्ठवचनाच्च ।

"प्रपञ्चमेव दुर्बोधं मन्ये तस्यानिरूपणात् ।
सुबोधं ब्रह्म सत्यत्वादात्मत्वात् स्वप्रकाशनात् ॥"

इति कूर्मवचनाच्च ।

"ब्रह्मैव विद्यते साक्षाद् वस्तुतोऽवस्तुतोऽपि च ।
तथा सति शिवज्ञानी किं गृह्णाति जहाति च ॥"

इति स्कान्दवचनाच्च । ननु ब्रह्मव्यतिरिक्तस्य सर्वस्यासत्त्वेऽपि मायापि न स्यादनादित्वं च न स्यादिति चेन्न । परमार्थतस्तदसत्त्वस्येष्टत्वात् । अत एव स्कान्दे

"शिवरूपातिरेकेण नास्ति माया च वस्तुतः ।
मायैव च शिवादन्या विद्यते चेच्छिवस्य तु ॥

## उपमानपरिच्छेदः ।

**अथोपमानं निरूप्यते । तत्र सादृश्यप्रमाकरणमुपमानम् । तथा-हि— नगरेषु दृष्टगोपिण्डस्य पुरुषस्य वनं गतस्य गवयेन्द्रियसन्निकर्षे सति भवति प्रतीतिरयं पिण्डो गोसदृश इति । तदनन्तरं च भवत्यनेन सदृशी मदीया गौरिति निश्चयः । तत्रान्वयव्यतिरेकाभ्यां गवयनिष्ठ-गोसादृश्यज्ञानं करणम् । गोनिष्ठगवयसादृश्यज्ञानं फलम् । नचेदं**

---

महत्त्वं परमं साक्षाद्धीयते सुरपुङ्गव ! ॥"
"तस्मादस्ति महादेवः साक्षादेव स्वयंप्रभुः ।
आनन्दरूपः सम्पूर्णो न तदन्योऽस्ति (किञ्च ? कश्च) न ॥"

इत्युक्तम् । तस्मात् सिद्धं श्रुतिस्मृतीतिहासपुराणसहस्रैः प्रपञ्चस्य मिथ्यात्व-मिति ॥

इति पेद्दादीक्षितविरचितायां वेदान्तपरिभाषाप्रकाशिकायाम्
अनुमानपरिच्छेदः ॥

---

### उपमानपरिच्छेदः ।

अनुमानं सम्प्रपञ्चं निरूप्य क्रमप्राप्तमुपमानं निरूपयितुं प्रतिजानीते — **अथेति** । अनुमाननिरूपणानन्तरमित्यर्थः । **तत्र** । उपमाने निरूपणीये । **सादृ-श्येति** । ज्ञायमानपदार्थगतसादृश्यानुभवात् तत्प्रतियोगिकस्मर्यमाणपदार्थगत-सादृश्यज्ञानमुपमानमित्यर्थः । उक्तलक्षणमुदाहरणनिष्ठतयोपपादयति — **तथा-हीति** । अदृष्टगोपिण्डस्य गोसादृश्यज्ञानानुदयादाह— **दृष्टगोपिण्डस्येति** । नगरस्थस्य गवयपिण्डदर्शनासम्भवादाह — **वनं गतस्येति** । सन्निकर्षाभाव-**काले** तज्ज्ञानोत्पत्तिं वारयति— **गवयेति** । प्रतीतिमभिनयति — **अयं पिण्ड इति** । उपमानप्रामाण्याङ्गीकारेऽपि फलकरणभावे वादिविप्रतिपत्तेः स्वाभिमत-फलकरणे सप्रमाणके दर्शयति — **तत्रेति** । उक्तज्ञानयोर्मध्ये । एतेन यथा गौस्तथा गवय इति वाक्यश्रवणसमनन्तरं गोसादृश्यविशिष्टपिण्डमनुभवतो वाक्यार्थं स्मरतश्चायमसौ गवयशब्दवाच्य इति प्रतीतिरुत्पद्यते । तत्र विशिष्ट-पिण्डज्ञानं करणं, वाच्यताज्ञानं फलमित्यपास्तम् । अतिदेशवाक्यादेवोक्तवाच्य-ताज्ञानसम्भवेनोपमानस्य मानान्तरस्यासिद्धेः । नच वाक्यश्रवणसमये गवयपद-

**प्रत्यक्षेण सम्भवति। गोपिण्डस्य तदेन्द्रियासन्निकर्षात्। नाप्यनुमानेन, गवयनिष्ठगोसादृश्यस्यातल्लिङ्गत्वात्। नापि मदीया गौरेतद्गवयसदृशी, एतन्निष्ठसादृश्यप्रतियोगित्वात्। यो यद्गतसादृश्यप्रतियोगी स तत्स-दृशः। यथा मैत्रनिष्ठसादृश्यप्रतियोगी चैत्रो मैत्रसदृश इत्यनुमानात् तत्सम्भव इति वाच्यम्। एवंविधानुमानानवतारेऽप्यनेन सदृशी मदीया गौरिति प्रतीतेरनुभवसिद्धत्वाद्, उपमिनोमीत्यनुव्यवसायाच्च। तस्मा-दुपमानं मानान्तरम्॥**

इति श्रीधर्मराजाध्वरीन्द्रविरचितायां वेदान्तपरिभाषायाम्

उपमानपरिच्छेदः॥

---

## आगमपरिच्छेदः।

**अथागमो निरूप्यते। यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो**

---

प्रवृत्तिनिमित्तस्य गवयत्वस्यानुपस्थित्या संबन्धिनोऽनवगमे सम्बन्धस्य दुरव-गमत्वादिति वाच्यम्। प्रतीतस्य गोसादृश्यस्याप्रवृत्तिनिमित्तत्वेऽपि तद्भ्रमादुक्त-वाच्यताज्ञानोत्पत्तेर्लाघवसहकृतप्रमाणोपस्थितौ कार्यान्वितशक्तिवत् तस्य प्रवृत्ति-निमित्तत्वनिरासान्न विरोध इति भावः। **नाप्यनुमानेनेति**। मदीया गौरेत-द्गवयसदृशी गवयनिष्ठसादृश्यादित्यस्य व्यधिकरणत्वादिति भावः। उक्त-व्याप्त्यस्फुरणदशायामनुभवोऽसिद्ध एव। किंच यदि व्यवहितगोसादृश्यज्ञानं प्रमाणान्तरजन्यमित्यभ्युपेयते, तदा नैव सादृश्यज्ञानार्थमपि प्रमाणान्तरं स्वी-क्रियतामित्यनुशयादाह — **उपमिनोमीति**। तथाच वैसादृश्ये तथानुभवा-भावाद् वैसादृश्यस्यार्थापत्तिप्रमाणेन समधिगतत्वाच्चेति भावः। उपपादितमर्थ-मुपसंहरति — **तस्मादिति**॥

इति श्रीपेद्दादीक्षितविरचितायां वेदान्तपरिभाषाप्रकाशिकायाम्

उपमानपरिच्छेदः॥

---

### आगमपरिच्छेदः।

शिष्यावधानार्थं प्रतिजानीते — **अथेति**। उपमाननिरूपणानन्तरमि-त्यर्थः। आगमप्रमाणस्य लक्षणमाह — **यस्येति**। अयोग्ये वाक्येऽतिव्याप्ति-

**मानान्तरेण न बाध्यते तद् वाक्यं प्रमाणम् । वाक्यजन्ये च ज्ञाने आकाङ्क्षायोग्यतासत्तयस्तात्पर्यज्ञानं चेति चत्वारि कारणानि । तत्र पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षा । क्रियाश्रवणे कारकस्य कारकश्रवणे क्रियायाः करणश्रवणे इतिकर्तव्यतायाश्च जिज्ञासाविषयत्वात् । अजिज्ञासोरपि वाक्यार्थबोधाद् योग्यत्वमुपात्तम् । तदवच्छेदकं च क्रियात्वकारकत्वादिकमिति नाव्याप्तिः । अभेदान्वये**

---

वारणाय न बाध्यत इत्युक्तम् । केनेत्यपेक्षायामाह — **मानान्तरेणे**ति । 'स प्रजापतिरि'त्याद्यर्थवादवाक्येऽव्याप्तिस्तदर्थस्य बाधितत्वादित्यत आह — **तात्पर्ये**ति । प्राशस्त्यरूपार्थस्य तत्राबाधितत्वादिति भावः । **ज्ञान** इति । प्रमाणरूप इत्यर्थः । **अकाङ्क्षे**ति । निराकाङ्क्षे घटः कर्मत्वमित्यादौ शब्दस्य संसर्गज्ञानाजनकत्वादिति भावः । आकाङ्क्षादिकं सहकारीत्युक्तं, तत्र प्रथमोपस्थितत्वेन प्रथमं शिष्यजिज्ञासायामाकाङ्क्षां निरूपयति — **तत्रे**ति । तेषु मध्ये इत्यर्थः । धूमादिपदस्मारितवह्निजिज्ञासाविषयेऽतिप्रसङ्गवारणाय पदार्थानामित्युक्तम् । पदार्थपदं वृत्त्या प्रकृतपदप्रतिपाद्यपरं बोध्यम् । तेन नोक्तातिप्रसङ्ग इति भावः । नदीकच्छसंसर्गपरतया प्रयुक्तेन नद्याः कच्छे महिषीत्यत्र नदीपदार्थे जलपदार्थनिरूपिताकाङ्क्षासत्त्वेऽपि, नद्याः कच्छपदार्थान्वितत्वेन तन्निरूपिताकाङ्क्षाया जलपदार्थेऽभावाद् तदंशेऽतिव्याप्तिवारणाय परस्परेत्युक्तम् । यद्यपीदं साकाङ्क्षमेव तथापि तदुपपादनार्थं तदिति ध्येयम् । लक्ष्ये लक्षणमुपपादयति — **क्रियाश्रवण** इति । जुहुयादिति क्रियाश्रवणे केनेति करणाकाङ्क्षायां पयसेति । पयसः करणत्वेनान्वयः । कथमितीतिकर्तव्यताकाङ्क्षायां तत्त्वेन 'एतद्वै पशूनां रूपमि'त्यादेरन्वयः । यजेतेति क्रियाश्रवणे कारकाकाङ्क्षायां सोमेनेति करणान्वयः । कथमितीतिकर्तव्यताकाङ्क्षायां दीक्षणीयाद्यङ्गानामन्वयः । तथाच क्रियाकारकेतिकर्तव्यतादीनां परस्परजिज्ञासाया विषयत्वमस्तीति भावः । योग्यत्वपदस्य प्रयोजनमाह — **अजिज्ञासोरि**ति । नन्वत्र श्रोतरि तदुत्पाद्यसंसर्गावगमप्रागभाव एव योग्यत्वं, तथाच यतो वाक्यान्न कदाचिदप्यन्वयबोधो जायते तत्र पदार्थ उक्तलक्षणाव्याप्तिरित्याशङ्क्योक्तयोग्यतावच्छेदकावच्छिन्नत्वमेव तल्लक्षणमित्यभिप्रेत्यावच्छेदकं दर्शयति — **तदि**ति । इतिकर्तव्यतात्वमादिपदग्राह्यम् । ननु तत्त्वमस्यादिवाक्ये कारकादिपदाभावेन कारकत्वादिरूपावच्छेदकघटितोक्तलक्षणाभावात्

च समानविभक्तिकपदप्रतिपाद्यत्वं तदवच्छेदकमिति तत्त्वमस्यादिवाक्येषु नाव्याप्तिः । एतादृशाकाङ्क्षाभिप्रायेणैव बलाबलाधिकरणे 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि'त्यत्र वैश्वदेवयागस्यामिक्षान्वितत्वेन न वाजिनाकाङ्क्षेति व्यवहारः । ननु तत्रापि वाजिनस्य जिज्ञासाविषयत्वेऽपि तद्योग्यत्वमस्त्येव प्रदेयद्रव्यत्वस्य यागनिरूपितजिज्ञासाविषयतावच्छेदकत्वादिति चेन्न । स्वसमानजातीयपदार्थान्वयबोधविरहसहकृतप्रदेयद्रव्यत्वस्यैव तदवच्छेदकत्वेन वाजिनद्रव्यस्य समानजातीयामिक्षाद्रव्यान्वयबोधसहकृतत्वेन तादृशावच्छेदकाभावाद्, आमिक्षायां तु नैवं वाजिनान्वयस्य तदानुपस्थितत्वात् । उदाहरणान्तरेष्वपि दुर्बलत्वप्रयोजक आकाङ्क्षाविरह एवमेव द्रष्टव्यः ।

---

तत्राव्याप्तिरित्यत आह—अभेदान्वय इति । परस्परेतिविशेषणकृत्यमाह—एतादृशेति । पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वरूपाकाङ्क्षाभिप्रायेणेत्यर्थः । तथाच वाजिनस्य वैश्वदेवयागाकाङ्क्षासत्त्वेऽपि न यागस्य वाजिनाकाङ्क्षेति भावः । बलाबलाधिकरण इति । द्वादशलक्षण्यां तृतीयाध्याये 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षादि'त्यत्र बलाबलाधिकरणे 'सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि'त्यत्र द्रव्यदेवतासम्बन्धानुमितवैश्वदेवयागस्य द्रव्यविशेषाकाङ्क्षायामेकवाक्योपात्तामिक्षावाजिनयोर्विकल्पेन द्रव्यत्वे प्राप्ते, समानलिङ्गकतद्धितश्रुत्युपात्तामिक्षान्वितायां न वाक्योपात्तवाजिनाकाङ्क्षेति व्यवहार इति भावः । वाजिनमिति क्षीरसारे आमिक्षाकारेण परिणते सति यत् कटुकं जलं तद् वाजिनमित्यर्थः । व्यवहार इति । शास्त्रीय इति शेषः । ननु नहि योग्यतामात्रं लक्षणं किन्तु तदवच्छेदकावच्छिन्नत्वम् । तच्च तत्र नेत्यत आह — प्रदेयद्रव्य(त्व)स्येति । नन्वामिक्षाद्रव्यस्य देवतारूपपदार्थान्वयबोधसहकृतत्वेनोक्तावच्छेदकाभावादव्याप्तिरित्यत आह — स्वसमानजातीयेति । स्वेति । प्रदेयद्रव्यत्वेन सजातीयेत्यर्थः । ननु वैश्वदेवयागस्यामिक्षाद्रव्येण सहाकाङ्क्षा न स्यात्, स्वसमानजातीयवाजिनद्रव्यान्वयबोधसहकृतप्रदेयद्रव्यत्वस्यावच्छेदकत्वादित्यत आह — आमिक्षायां त्विति । तदेति । आमिक्षान्वयबोधकाल इत्यर्थः । एवं वैदिकवाक्य आकाङ्क्षाभावमुक्त्वा घटः कर्मत्वमित्यादिलौकिकवाक्येष्वपि तदभावमाह -- उदाहरणान्तरेष्वपीति । यद्वा उक्त-

**योग्यता च तात्पर्यविषयसंसर्गाबाधः, अग्निना सिञ्चेदित्यादौ तादृशसंसर्गबाधात्। 'स प्रजापतिरात्मनो वपामुदखिददि'त्यादावपि तात्पर्यविषयरूपपशुप्राशस्त्याबाधाद् योग्यता। तत्त्वमस्यादिवाक्येष्वपि वाच्याभेदबाधेऽपि लक्ष्यस्वरूपाभेदे बाधाभावाद् योग्यता। आसत्तिश्चाव्यवधानेन पदजन्यपदार्थोपस्थितिः। मानान्तरोपस्थापित-**

---

न्यायं बलाबलाधिकरणनिष्ठोदाहरणान्तरेष्वप्यतिदिशति — **उदाहरणेति**। तथाच कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोती'त्यादौ प्रसिद्धाग्निहोत्रादन्यदेवाग्निहोत्रनामकं मासादिगुणविशिष्टं कर्मान्तरं विधीयते। नतु प्रसिद्धाग्निहोत्रे मासरूपगुणो विधीयते। भिन्नप्रकरणत्वे(न) प्रसिद्धाग्निहोत्रस्य स्वप्रकरणपठिताङ्गैरेवाकाङ्क्षाविरमाद् मासादिगुणेन सहाकाङ्क्षाविरहादिति भावः। बलाबलाधिकरणनिष्ठोदाहरणान्तरेष्वप्यतिदिशति — **उदाहरणान्तरेष्विति**। तथाच 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्यत्र तृतीयावगतशेषत्वस्य 'कदाचनस्तरीरसी'त्यादेः शेष्याकाङ्क्षायां मन्त्रलिङ्गाद् गार्हपत्यसमीपे स्थित्वेन्द्रमुपतिष्ठते इतीन्द्रोपस्थानस्य शेषित्वप्राप्तौ द्वितीयया गार्हपत्यप्राधान्यावगमेन तदुपस्थानस्यैव शेषित्वेनान्विततया इन्द्रोपस्थानाकाङ्क्षाविरहाल्लिङ्गस्य दौर्बल्यम्। एवं लिङ्गवाक्योदाहरणादावप्याकाङ्क्षाभाव उपपादनीय इति भावः।

क्रमप्राप्तां योग्यतां निरूपयति — **योग्यता चेति**। संसर्गाबाध इति विशे(षण ? ष्य)कृत्यमाह — **अग्निनेति**। तथाच तत्रातिव्याप्तिवारणार्थं तद्विशे(षणो ? ष्यो)पादानमिति भावः। तात्पर्यविषयपदस्य प्रयोजनमाह — **स प्रजापतिरिति**। **प्राशस्त्येति**। तथाच तत्र प्रतीयमानार्थस्य बाधितत्वेऽपि **एवं कर्मणः सामर्थ्यं यदग्नौ** प्रहुतमात्रायां वपायामजस्तूपर उदगादिति इत्थं च बहवः पशवोऽभूवन्निति तात्पर्यविषयीभूतप्राशस्त्यरूपार्थस्य बाधाभावादिति भावः। ननु तत्त्वमसीत्यादावव्याप्तिः। प्रतीयमानविशिष्टार्थाभेदस्य तत्र बाधितत्वादित्याशङ्क्य, उपक्रमादिना जीवपरैक्यस्वरूपे तात्पर्यावधारणात् तत्राबाध इत्याह — **तत्त्वमसीति**। आसत्तिं निरूपयति — **आसत्तिश्चेति**। ननु लाघवेन पदार्थोपस्थितित्वेनैव तदुपस्थितेः शाब्दज्ञानहेतुतया पदजन्यत्वस्य गौरवेणाप्रयोजकत्वेन तद्विशेषणं व्यर्थम्। प्रकारान्तरेणापि तदुपस्थितिसम्भवात्। नच घटः कर्मत्वमित्यत्राप्यन्वयबोधापत्तिः, तदन्वयबोधे तत्तत्पदविशेषस्यैव स्वरूपयोग्य-

पदार्थस्यान्वयबोधाभावात् (पदजन्येति) । अत एवाश्रुतस्थले तत्त-त्पदाध्याहारो द्वारमित्यादौ (पिधेहीति) । अत एव 'इषेत्वे'त्यादौ छिनद्मीति पदाध्याहारः । अत एव विकृतिषु सूर्याय जुष्टं निर्वपामीति पदप्रयोगः ।

पदार्थश्च द्विविधः शक्यो लक्ष्यश्चेति । तत्र शक्तिर्नाम पदाना-मर्थेषु मुख्या वृत्तिः । यथा घटपदस्य पृथुबुध्नोदराद्याकृतिविशिष्टे

---

त्वेन तस्य तदयोग्यत्वादित्यत आह — मानान्तरेति । पदजन्यत्वानङ्गीकारे प्रत्यक्षाद्युपस्थितं तीरादिकमादाय घोषादिपदैस्तदन्वयबोधसम्भवे लक्षणोच्छेद-प्रसङ्गादिति भावः । ननु सिद्धान्तेऽपि स्मृततीरपदात् तीरोपस्थितिसम्भवे लक्षणोच्छेदस्य दुर्वारत्वाद्, यदि च गङ्गाघोषपदयोरेकवाक्यतानिर्वाहाय सा कल्प्यते, तदा तुल्यम् । तथाच तदजन्यत्वं नोपस्थितिविशेषणम् । किंच द्वारमित्यादौ प्रकारान्तरेणोपस्थितपिधानादिनान्वयबोधदर्शनेन पदजन्यत्वस्य व्यर्थत्वादित्याशङ्कयाह — अत एवेति । तथाच द्वारमित्यादौ पिधेहीतिपदा-ध्याहाराभावे पिधानांशे तज्ज्ञानस्य शाब्दत्वं न स्यात् । अनुमितित्वे व्याप्ति-ज्ञानजन्यत्ववच्छाब्दत्वेऽपि पदजन्यत्वस्य प्रयोजकत्वात् । नच श्रूयमाणपदमेव पिधानांशेऽप्यन्वयबोधजनकमिति वाच्यम् । तस्य तत्राशक्तत्वेनाननुभावक-त्वात् । अन्यथा तत्रापि शक्तिकल्पनापत्तेः । तस्मात् पदमेव पदार्थोपस्थिति-द्वारान्वयबोधकमिति पदजन्यपदार्थोपस्थितिरेवासत्तिः । अत एव लाघवादाव-श्यकत्वाच्च पदा(द)र्थाध्याहार एवेति निरस्तम्, उक्तयुक्त्या गौरवस्यापि प्रामा-णिकत्वादिति भावः । ननु 'इषेत्वे'त्यादावर्थाध्याहारेणैवान्वयबोधदर्शनात् कथं शब्दाध्याहार(व्यवहार?)व्यवस्थापनमित्यत आह— अत एवेति । पदजन्य-पदार्थोपस्थितेरासत्तित्वादेवेत्यर्थः । विकृतिष्विति । सौर्यादावतिदेशप्राप्तानाम् 'अग्नये जुष्टं निर्वपामी'त्यादिमन्त्राणामर्थसमन्वयसिद्ध्यर्थमग्निपदपरित्यागेन सू-र्यादिपदाध्याहारलक्षण ऊहो नवमाध्याय उपपादित इति भावः ।

अन्वयप्रतियोगिपदार्थं विभजते — पदार्थश्चेति । द्वैविध्यमाह — शक्य इति । शक्तिविषयत्वं शक्यत्वमित्यतः शक्तिं निरूपयति — तत्रेति । लक्षणायामतिव्याप्तेराह — मुख्येति । उदाहरति — यथेति । वस्तुविशेष इति । एतच्च यद्वेत्यादिग्रन्थानुसारेण द्रष्टव्यम् । अन्यथा जातिमात्रे शक्तिरिति ग्रन्थानुपपत्तेः । यद्वा वस्तुनो विशेष इति व्युत्पत्त्या वस्तुनिष्ठासाधारणो धर्मो

**वस्तुविशेषे वृत्तिः । सा च शक्तिः पदार्थान्तरम् । सिद्धान्ते कारणेषु कार्यानुकूलशक्तिमात्रस्य पदार्थान्तरत्वात् । सा च तत्तत्पदजन्यपदार्थज्ञानरूपकार्यानुमेया । तादृशशक्तिविषयत्वं शक्यत्वम् । तच्च जातेरेव न व्यक्तेः । व्यक्तीनामानन्त्येन कल्पनं गौरवम् । कथं तर्हि गवादिपदाद् व्यक्तिभानमिति चेन्न । जातेर्व्यक्तिसमानसंवित्संवेद्यत्वादिति**

---

विवक्षित इत्यर्थः । अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारो भगवदभिप्रायः सङ्केतः शक्तिरिति तार्किकरीतिः । तां निराकरोति — **सा चेति** । तत्र हेतुमाह — **सिद्धान्त इति** । तथाच तदभिप्रायस्य पदनिष्ठत्वाभावादीश्वरेच्छायाः सर्वसाधारणत्वेन नियतपदविशेष(विषय)त्वायोगाच्चेति भावः । ननु भवेदेवं यदि शक्तिसिद्धिः स्यात् । सैव तु नास्ति मानाभावादित्यत आह — **सा चेति** । अयं भावः प्रयोजकवृद्धोदीरितघटमानयेतिवाक्यश्रवणा(न)न्तरभाविप्रयोज्यवृद्धसमवेतघटानयनादिव्यवहारलिङ्गेन तटस्थो व्युत्पित्सुः प्रयोज्यस्य घटानयनादिज्ञानमनुमिनोति । अनन्तरं तज्ज्ञानहेतुत्वं घटमानयेतिवाक्यस्य कल्पयति, उपस्थितत्वात् तदन्वयव्यतिरेकानुविधानाच्च । ततश्च घटं पश्य पटमानयेतिवाक्येषु घटादिपदावापे घटादिज्ञानस्य तत्परित्यागे घटादिज्ञानाभावस्य च दर्शनाद् घटपदं घटज्ञानजनकम् आनयेतिपदमानयनज्ञानजनकमिति निश्चिनोति । तदनन्तरं घटपदं घटज्ञानजनकतावच्छेदकवत्, तज्जनकत्वादिति ज्ञानजनकतावच्छेदकरूपशक्तिसिद्धिरित्यनुमानं शक्तौ मानमिति । नन्वस्तु शक्तिः, शक्यत्वे किमायातमित्यत आह— **तादृशेति** । व्यक्त्याकृतिजातयः शक्या इति न्यायविदो वदन्ति, तान् दूषयति — **तच्चेति** । शक्तिविषयत्वमित्यर्थः । **जातेरिति** । विशिष्टकल्पने जातेर्विशेषणत्वेन प्रथमोपस्थितत्वादावश्यकत्वाच्चेति भावः । एवकारव्यावर्त्यमाह — **न व्यक्तेरिति** । यद्वा परमते बाधकमप्याह — **न व्यक्तेरिति** । अत्र किमेकव्यक्तेः शक्यत्वमुत सर्वव्यक्तेः । नाद्यः विनिगमकाभावाद्, न द्वितीय इत्याह—**व्यक्तीनामिति**। **कल्पनं गौरवमिति** । अनेकासु शक्तिकल्पनं गौरवमिति जातावेव शक्तिः कल्प्यते । तदुक्तं भट्टपादैः —

"विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे ।"

इति भावः । जातिमात्रस्य शक्यत्वे व्यक्तिभानं न स्याद् व्यक्तौ शक्त्यभावादिति शङ्कते—**कथमिति** । जातिग्राहकमात्रस्य व्यक्तिग्राहकत्वनियमेन जाति-

भावः। यद्वा गवादिपदानां व्यक्तौ शक्तिः स्वरूपसती नतु ज्ञाता। जातौ तु सा ज्ञाता हेतुः। नतु व्यक्त्यंशे शक्तिज्ञानमपि कारणं, गौरवात्। जातिशक्तिज्ञाने सति व्यक्तिशक्तिज्ञानं विना व्यक्तिधीविलम्बाभावाच्च। अत एव न्यायमतेऽप्यन्वये शक्तिः स्वरूपसतीति सिद्धान्तः। ज्ञायमानशक्तिविषयत्वमेव वाच्यत्वमिति व्यक्तिरवाच्या। अथवा व्यक्तेर्लक्षणया लाभः। यथा नीलो घट इत्यत्र नीलशब्दस्य

---

ज्ञानस्य व्यक्तिविषयत्वमिति प्राभाकरमतानुसारेण समाधत्ते— **जातेरिति**। ननु (न) जातिग्राहकस्य व्यक्तिग्राहकत्वनियमः, अप्रयोजकत्वात्। अन्यथा जातिस्मरणसमये व्यक्तिभानापत्तेः, व्यक्तिग्राहकसामग्रीयत्वस्योपाधित्वाच्च। तथाच जातिमात्रशक्तिग्रहपक्षे न व्यक्तिभानं स्यादित्यरुचेराह—**यद्वेति**। स्वरूपसच्छक्तिमात्रेण व्यक्तिभानसंभवादिति भावः। तर्ह्यव्युत्पन्नस्यार्थप्रत्ययापत्तिरित्यत आह— **जाताविति**। जात्यंशे शक्तेर्ज्ञाताया एव प्रयोजकत्वाभ्युपगमान्नाव्युत्पन्नस्य तत्प्रत्यय इति भावः। ननु विनिगमकाभावाद् व्यक्त्यंशशक्तिज्ञानमेव हेतुरस्तु, नतु जात्यंश इत्याशङ्क्य किमिदं तटस्थस्य चोद्यमुत नैयायिकस्य, नाद्य इत्याह— **नतु व्यक्त्यंश** इति। जात्यंशशक्तिज्ञानहेतुत्वे लाघवमेव विनिगमकमिति भावः। नन्वन्वयव्यतिरेकाभ्यां व्यक्त्यंशशक्तिज्ञानमपि हेतुरेवेत्यत आह—**जातीति**। तदसिद्धेरिति भावः। द्वितीयं प्रतिबन्द्या दूषयति — **अत एवेति**। अन्यथा वृत्त्यनुपस्थापितस्य संसर्गस्यान्वयधीविषयत्वासम्भवादिति भावः। ननु व्यक्तेरपि वाच्यत्वे व्यक्तिरवाच्येति सिद्धान्तः कथमित्यत आह— **ज्ञायमानेति**। यद्वा व्यक्तेः शक्यत्वे वाच्यत्वमपि स्यादित्यत आह — **ज्ञायमानेति**। नन्वत्र मते कथं व्यक्तिभानं, किं समानवित्तिवेद्यतया उत स्वरूपसच्छक्तिमात्रेण। नाद्यः पूर्वभेदप्रसङ्गात् पूर्वोक्तदोषापत्तेश्च। नच व्यक्त्यंशशक्तिसद्भावासद्भावाभ्यां भेद इति वाच्यम्। तर्हि व्यक्त्यंशशक्तिनिरूपणस्य चोद्याननुरूपत्वेन यद्वेति कल्पान्तरोत्थानानुपपत्तेः। न द्वितीयः, अव्युत्पन्नस्याप्यर्थबोधापत्तेः। व्यक्त्यंशवृत्त्यभावभ्रमवतो जात्यंशशक्तिज्ञानाद् व्यक्त्यभानापत्तेरित्यपरितोषान्मण्डनाचार्यमतमाह — **अथवेति**। नन्वेकदेशशक्तस्य कथं विशिष्टे लक्षणा स्यादित्यत आह—**यथेति**। अन्यथा नीलानन्वयप्रसङ्गादिति भावः। यद्वा

"स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणा।"

नीलगुणविशिष्टे लक्षणा, तथा जातिवाचकस्य तद्विशिष्टे लक्षणा । त-दुक्तं — 'अनन्यलभ्यः शब्दार्थः' इति । एवं शक्यो निरूपितः ।

अथ लक्ष्यः पदार्थो निरूप्यते । तत्र लक्षणाविषयो लक्ष्यः । ल-क्षणा च द्विविधा केवललक्षणा लक्षितलक्षणा चेति । तत्र शक्यसाक्षा-त्सम्बन्धः केवललक्षणा । यथा गङ्गायां घोष इत्यत्र प्रवाहसाक्षात्स-म्बन्धिनि तीरे गङ्गापदस्य केवललक्षणा । यत्र शक्यपरम्परासम्बन्धे-नार्थान्तरप्रतीतिस्तत्र लक्षितलक्षणा । यथा द्विरेफपदस्य रेफद्वययुक्त-भ्रमरपदघटितपरम्परासम्बन्धेन मधुकरे वृत्तिः । गौण्यपि लक्षितलक्ष-णैव । सिंहशब्दवाच्यसम्बन्धिक्रौर्यादिसम्बन्धेन माणवकस्य प्रतीतेः । प्रकारान्तरेण त्रिविधा । जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति । तत्र शक्यमनन्तर्भाव्य यत्रार्थान्तरप्रतीतिस्तत्र जहल्लक्षणा । यथा विषं भुङ्क्ष्वेति । तत्र हि स्वार्थं विहाय शत्रुगृहभोजननिवृत्तिर्ल-

---

इति न्यायाद् गोत्वादन्येन रूपेण गोव्यक्तेरनुपस्थितत्वेन कथं तत्र लक्षणेत्यत आह — **यथेति** । तथाचात्र व्यभिचारान्नायं नियम इति भावः । **तद्विशिष्ट इति** । यद्यपि गोपदादेर्युगपदेव शक्तिलक्षणाभ्यां जातिव्यक्त्युपस्थापकत्वं सम्भवतीति जातौ लक्षणास्वीकारो व्यर्थः, तथापि युगपद्वृत्तिद्वयविरोधभीत्या तथो-क्तम् । मतान्तरे तु शक्त्या तद्बोध इष्ट एव । तथाच तद्विशिष्टपदं तदुप-हितपरं द्रष्टव्यम् । तस्माद् व्यक्तौ लक्षणैव । तदुक्तं 'लक्षणीयाया व्यक्तेरि'ति भावः । नीलपदस्य नीलद्रव्ये लक्षणेत्यत्र सम्मतिमाह — **तदुक्तमिति** । द्रव्यस्य घटपदादिजन्यत्वात् तन्मात्रे न लक्षणेति भावः । एतेन मानान्तरेणो-पस्थितव्यक्तिमादायान्वयबोधसम्भवे तत्र लक्षणाकल्पनमनर्थकमित्यपास्तम्, पदोपस्थितानामेव शाब्दबोधविषयत्वनियमादित्युक्तत्वादिति भावः ।

क्रमप्राप्तं लक्ष्यपदार्थं निरूपयितुं प्रतिजानीते — **अथेति** । तत्र लक्ष्ये निरूपणीये । वाच्यसम्बन्धो लक्षणालक्षणमित्यभिसन्धाय लक्षणां विभजते — **लक्षणा चेति** । **द्विरेफपदस्येति** । द्विरेफपदं द्वौ रेफौ यस्येति बहुव्रीहिसमासेन भ्रमरपदं लक्षयति । भ्रमरपदेन च मधुकर उपस्थाप्यत इति शक्यपरम्परासम्ब-न्धेन तस्य मधुकरे वृत्तिरित्यर्थः । ननु लक्षितलक्षणालक्षणं गौण्यामतिव्याप्त-मित्यत आह — **गौण्यपीति** । **त्रिविधेति** । लक्षणेति शेषः । **स्वार्थमिति** ।

क्ष्यते। यत्र शक्यार्थमन्तर्भाव्यैवार्थान्तरप्रतीतिः, तत्राजहल्लक्षणा। यथा शुक्लः पट इत्यत्र हि शुक्लशब्दः स्वार्थं शुक्लगुणमन्तर्भाव्यैव तद्वति द्रव्ये लक्षणया वर्तते। यत्र हि विशिष्टवाचकशब्द एकदेशं विहायैकदेशे वर्तते तत्र जहदजहल्लक्षणा। यथा सोऽयं देवदत्त इति। अत्र हि पदद्वयवाच्ययोर्विशिष्टयोरैक्यानुपपत्त्या पदद्वयस्य विशेष्यमात्रपरत्वम्। यथा वा 'तत्त्वमसी'त्यादौ तत्पदवाच्यस्य सर्वज्ञत्वादिविशिष्टस्य त्वम्पदवाच्येनान्तःकरणादिविशिष्टेनैक्यायोगादैक्यसिद्ध्यर्थं स्वरूपे लक्षणेति साम्प्रदायिकाः। वयं तु ब्रूमः—सोऽयं देवदत्तः 'तत्त्वमसी'त्यादौ विशिष्टवाचकपदानामेकदेशपरत्वेऽपि न लक्षणा। शक्त्युपस्थितविशिष्टयोरन्वयानुपपत्तौ विशेष्ययोः शक्त्युपस्थितयोरेवाभेदान्वयाविरोधात्। यथा घटोऽनित्य इत्यत्र घटपदवाच्यैकदेशघटत्वस्यायोग्यत्वेऽपि योग्यघटव्यक्त्या सहानित्यत्वान्वयः। यत्र पदार्थैकदेशस्य विशेषणतयोपस्थितिस्तत्रैव स्वातन्त्र्येणोपस्थितये लक्षणाभ्युपगमः। यथा—

---

विषान्नभोजनकर्तव्यत्वमित्यर्थः। ननु सोऽयमादिपदानां शक्त्या स्वार्थप्रतिपादकत्वमस्तु नतु लक्षणया, मुख्यार्थे सम्भवत्यमुख्यार्थकल्पनाया अन्याय्यत्वादित्याशङ्क्य मुख्यार्थासम्भवात् तत्कल्पनमित्याह — अत्र हीति। सोऽयं देवदत्त इत्यत्र तद्देशतत्कालविशिष्टस्यैतद्देशैतत्कालविशिष्टस्य च देवदत्तस्यैक्यानुपपत्त्या तस्य देवदत्तमात्रपरत्वमित्यर्थः। लौकिकोदाहरणमुक्त्वा वैदिकं तदाह — यथा वेति। स्वरूप इति। पूर्णानन्दानुभव इत्यर्थः। वयं तु ब्रूम इति। एतच्च विशिष्टशक्त्यङ्गीकारपक्षे बोध्यं, व्यक्तिलक्षणापक्षेऽसम्भवात्। नच तत्पक्षे व्यक्त्यंशशक्त्यभावभ्रमवतो जात्यंशशक्तिभानाद् व्यक्तिभानापत्तेरिति दूषणमुक्तमिति वाच्यम्। तादृशभ्रमस्य प्रतिबन्धकत्वेन तदभावस्य कारणत्वाङ्गीकारान्नातिप्रसङ्गः। व्यक्तिलक्षणापक्षस्यायुक्तत्वेन विशिष्टशक्तेरवश्यं स्वीकरणीयत्वाच्च। अन्यथौपाधिककारणादिपदानां विशिष्टे शक्तिर्न स्यात्, पूर्ववर्तित्वशक्तपदेनैव लक्षणया विशिष्टलाभसम्भवादिति भावः। ननु पदार्थः पदार्थेनैवान्वेतीति व्युत्पत्तेः कथं तदेकदेशेन विशेष्यमात्रेणान्वय इत्यत आह — यथेति। तर्हि पदार्थः पदार्थेनान्वेति नैकदेशेनेत्यस्य को विषय इति चेन्न। विशेष्यस्यायोग्यत्वेऽपि विशेषणस्य विशेष्यान्विततया निराकाङ्क्षत्वादपदार्थेनान्वयो न भवति यथा गौर्नित्येत्यत्र। नन्वेवं नित्या गौरित्यत्र

**नित्यो घट इत्यत्र घटपदाद् घटत्वस्य स्वातन्त्र्येणानुपस्थित्या तादृशोपस्थित्यर्थं घटपदस्य घटत्वे लक्षणा । एवमेव तत्त्वमस्यादिवाक्ये न लक्षणा । शक्त्या स्वातन्त्र्येणोपस्थितयोस्तत्त्वम्पदार्थयोरभेदान्वये बाधकाभावात् । *अन्यथा गेहे घटः पटे रूपमित्यादावपि घटमानयेत्यादौ घटत्वगेहत्वादेरभिमतान्वयबोधायोग्यतया तत्रापि घटादिपदानां विशेष्यमात्रपरत्वं लक्षणा च स्यात् । तस्मात् तत्त्वमस्यादिवाक्येष्वाचार्याणां लक्षणोक्तिरभ्युपगमवादेन । जहदजहल्लक्षणोदाहरणं तु काकेभ्यो दधि रक्ष्यतामित्यादावेव । तत्र शक्यकाकत्वपरित्यागेनाशक्यदध्युपघातकत्वपुरस्कारेणाकाके काकशब्दस्य प्रवृत्तेः ।**

---

गोपदस्य गोत्वे लक्षणा न स्यात् । शक्त्युपस्थितगोव्यक्तिरूपविशेष्यांशे नित्यत्वान्वयानुपपत्तावपि शक्त्युपस्थिताविशेषणांशेऽन्वयबोधसम्भवादित्यत आह — यत्रेति । विशेष्यस्य विशेषणस्य च पदार्थैकदेशत्वाविशेषेऽपि क्वचिल्लक्षणा क्वचिन्नेत्यत्र किं विनिगमकमित्यत आह — **स्वातन्त्र्येणेति** । विशेष्यतयेत्यर्थः । ननूपस्थितमात्रेण तदन्वयबोधसम्भवेऽपि विशेष्यत्वस्य वैयर्थ्यमिति चेन्न । प्रवृत्तिनिमित्तस्यार्थान्तरेणान्वयाननुभवेन विशेष्यतया तदुपस्थितेः प्रयोजकत्वादिति भावः । नन्वेवमुक्तन्यायेन तत्त्वमसीत्यादिवाक्याच्छक्त्या सच्चिदानन्दब्रह्मबोधसम्भवे तत्र लक्षणा व्यर्थैव स्यादित्याशङ्क्य परिहरति — **एवमिति** । इह पक्षे बाधकमाह — **अन्यथेति** । नन्वेवं —

> ''तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा ।
> सोऽयमित्यादिवाक्यस्थपदयोरिव नापरा ॥''

इत्यादिना तत्त्वमादीनामाचार्यचरणैर्लक्षणास्वीकारेण तन्निराकरणेऽपसिद्धान्तः स्यादित्याशङ्कामुपसंहारव्याजेन परिहरति — **तस्मादिति** । ननूक्तविधया जहदजहल्लक्षणोदाहरणाभावेन त्रिविधा लक्षणेति प्रतिज्ञा विरुध्येतेत्यत आह — **जहदिति** । ननु 'यतो वाचो निवर्तन्त' इति वाच्यत्वप्रतिषेधात् कथं मुख्यवृत्त्या स्वरूपप्रतिपादकत्वं तत्त्वमस्यादिवाक्यानामिति चेन्न ।

> ''ब्रह्मैकविषयां वाचं वदेत् सन्ततमास्तिकः ।''

'अन्या वाचो विमुञ्चथे'त्यादिना ब्रह्मन्यागविषयत्वप्रतिपादनेन तस्य लक्षणावृत्तिविषयत्वाभावपरतयापि योजयितुं शक्येत्वात् । अत एव मुख्यवृत्तिविषयत्वा-

---

* अत्र 'गेहे घटः घटे रूपं घटमानयेत्यादौ' इति मुद्रितपुस्तकपाठो वरम् ।

**लक्षणाबीजं तु तात्पर्यानुपपत्तिरेव, नत्वन्वयानुपपत्तिः । काकेभ्यो दधि रक्ष्यतामित्यत्रान्वयानुपपत्त्यभावात् । गङ्गायां घोष इत्यादौ तात्पर्यानुपपत्तेरपि भावात् । लक्षणा च न पदमात्रवृत्तिः । किन्तु वाक्यवृत्तिरपि । यथा गम्भीरायां नद्यां घोष इत्यत्र गम्भीरायां नद्यामिति पदद्वयसमुदायस्य तीरे लक्षणा । ननु वाक्यस्याशक्यतया कथं शक्यसम्बन्धरूपा लक्षणा । उच्यते । शक्त्या यत् पदसम्बन्धेन ज्ञाप्यते तत्सम्बन्धो लक्षणा । शक्तिज्ञाप्यश्च यथा पदार्थः तथा वाक्यार्थोऽपीति**

---

भावेऽपि लक्षणावृत्तिविषयत्वपरत्वादिति विश्वेश्वरपण्डितोक्तमपास्तं, मुख्ये सम्भवत्यमुख्यकल्पनाया अयुक्तत्वादिति । ननु काकेभ्य इत्यत्र कथं लक्षणा । अन्वयानुपपत्तिरूपलक्षणाबीजस्य तत्राभावादित्यत आह — **लक्षणेति** । यष्टीः प्रवेशय छत्रिणो यान्तीत्यादौ सर्वत्र तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वदर्शनादिति भावः । **अभावादिति** । काकाद् दधिरक्षणसम्भवादिति भावः । नन्वन्वयानुपपत्तिरेव लक्षणाबीजं नतु तात्पर्यानुपपत्तिः । गङ्गायां घोष इत्यादौ तात्पर्यग्रहात् प्रागेवान्वयानुपपत्तिप्रतिसन्धानेन तस्यैव क्लृप्तत्वात् । नच यष्टीः प्रवेशयेत्यादौ यष्ट्यादेः प्रवेशनान्वयानुपपत्त्यभावेन तत्र लक्षणा न स्यादिति वाच्यम् । प्रकरणादिना भोजनानुकूलप्रवेशनावगमेन तत्रापि तत्सम्भवादित्यत आह — **गङ्गायामिति** । तथाच गङ्गायां प्रमेय(त्व ?)मिति वाक्ये यदा तीरे तात्पर्यनिश्चयः, तदा तीरे लक्षणा न स्यात् । अन्वयानुपपत्तेरभावात् । एवञ्च गङ्गायां घोष इत्यादौ तात्पर्यग्रहणानन्तरमेवान्वयानुपपत्तिप्रतिसन्धानमिति सर्वत्र तात्पर्यानुपपत्तिरेव लक्षणाबीजं सर्वानुगतत्वादिति भावः । ननु लक्षणा शक्ततावच्छेदकावच्छिन्नवृत्तिमती, वृत्तित्वात्, शक्तिवदित्यनुमानेन लक्षणायाः पदमात्रवृत्तित्वसिद्धेः कथं तत्त्वमादिवाक्ये लक्षणाभिधानमित्याशङ्क्याप्रयोजकत्वान्नेदमनुमानमित्याह — **लक्षणा चेति** । ननु पदलक्षणयैवार्थप्रतीत्युपपत्तौ न वाक्यलक्षणा, गौरवादित्यत आह —**यथेति** । अन्यथान्यतरपदेनैव तीरोपस्थितिसम्भवे इतरपदवैयर्थ्यापत्तेर्गौरवमपि प्रामाणिकमिति भावः । वाक्यलक्षणामाक्षिपति — **नन्विति** । शक्तिरूपपदसम्बन्धेन यज्ज्ञाप्यते तत्सम्बन्धो लक्षणेत्याह — **उच्यत इति** । वस्तुतस्तु शक्तिसादृश्यान्यत्वे सति अन्वयबोधानुकूलपदार्थोपस्थितिहेतुत्वे सति शक्तिसम्बन्धज्ञाप्यसम्बन्धो लक्षणेत्यत्र तात्पर्यम् । ननु पदार्थस्यैव ज्ञाप्यत्वाद् दोषतादवस्थ्यमित्यत आह — **शक्तीति** । अन्यथा वाक्यश्रवणानन्तरं

**न काचिदनुपपत्तिः । एवमर्थवादवाक्यानां प्रशंसारूपाणां प्राशस्त्ये लक्षणा । 'सोऽरोदीदि'त्यादिनिन्दार्थवादवाक्यानां निन्दितत्वे लक्षणा । अर्थवादगतपदानां प्राशस्त्यादिलक्षणाभ्युपगमे एकेन पदेन तदुपस्थितिसम्भवे पदान्तरवैयर्थ्यं स्यात् । एवञ्च विध्यपेक्षितप्राशस्त्यरूपपदार्थप्रत्यायकतयार्थवादसमुदायस्य पदस्थानीयतया पदं सद् विधिना सहैकवाक्यं भवतीत्यर्थवादानां पदैकवाक्यता । क्व तर्हि वाक्यैकवाक्यता । यत्र प्रत्येकं भिन्नसंसर्गप्रतिपादकयोरुभयोर्वाक्ययोराकाङ्क्षावशेन महावाक्यार्थबोधकत्वं, यथा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"त्यादिवाक्यानां "समिधो यजती"त्यादिवाक्यानां च परस्परापेक्षिताङ्गाङ्गिबोधकतयैकवाक्यता । तदुक्तं भट्टपादैः—**

**"स्वार्थबोधे समर्थानामङ्गाङ्गित्वाद्यपेक्षया ।**
**वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥"**

**इति । एवं द्विविधोऽपि पदार्थो निरूपितः । तदुपस्थितिश्चासत्तिः । सा च शाब्दबोधे हेतुः । तथैवान्वयव्यतिरेकदर्शनात् । एवं महावाक्यार्थ-**

---

संसर्गप्रत्ययो न स्यादिति भावः । नन्वेवमपभ्रंशे लक्षणा स्यात् । नचेष्टापत्तिः । वृत्तिमत्त्वेन तस्य तस्यापि साधुत्वापत्तौ यज्ञप्रयोगापत्तेः । वृत्तेरेव पदसाधुत्वात्मकत्वादिति चेत् । न । व्याकरणव्युत्पादितत्वस्यैव पदवाक्यसाधारणस्य साधुत्वाभ्युपगमाद् अपभ्रंशस्यातथात्वादिति, तदेतदभिसन्धायाह — **न काचिदिति** । नन्वस्तु लौकिकवाक्ये लक्षणा । तथापि कथं तत्त्वमस्यादौ लक्षणा वैदिकवाक्यलक्षणायाः क्वचिदप्यक्लृप्तत्वादित्यत आह — **एवमिति** । नन्वर्थवादे न वाक्यलक्षणा, किन्तु प्रत्येकपदलक्षणा, लाघवादित्यत आह — **अर्थवादेति** । अर्थवादपदसमुदायलक्षणाभ्युपगमे समुदायपदत्वाभावेन पदं सद् विधिना पदैकवा(क्यता ? क्यं) न स्यादित्यत आह— **एवञ्चेति** । ननु त्वदुक्तन्यायेन सर्वत्र वाक्यस्यापि पदत्वसम्भवेन वाक्यैकवाक्यता कुत्रापि न स्यादिति शङ्कते — **क्व तर्हीति** । **बोधकत्वमिति** । तत्र वाक्यैकवाक्यतेत्यध्याहारानुषङ्गाभ्यां योजनीयम् । उदाहरति — **यथेति** । प्रयाजादिरङ्गम्, आग्नेयादिषट्कमङ्गि । प्रकृतमुपसंहरति — **एवमिति** । नन्वासत्तिनिरूपणमनर्थकं तस्याः शाब्दबोधाङ्गत्वे मानाभावादित्यत आह— **सा चेति** । शाब्दज्ञानसामान्यकारणमुक्त्वा विशेषकारण-

बोधेऽवान्तरवाक्यार्थबोधो हेतुः तथैवान्वयाद्यवधारणात् ।

क्रमप्राप्तं तात्पर्यं निरूप्यते । तत्र तत्प्रतीतीच्छयोच्चरितत्वं न तात्पर्यम्, अर्थज्ञानशून्येन पुरुषेणोच्चरिताद् वेदादर्थप्रत्ययाभावप्रसङ्गात् । अयमध्यापकोऽव्युत्पन्न इति विशेषदर्शनेन तत्र तात्पर्यभ्रमस्याप्यभावात् । नचेश्वरीयतात्पर्यज्ञानात् तत्र शाब्दबोध इति वाच्यम् । ईश्वरानङ्गीकर्तुरपि तद्वाक्यादर्थप्रत्ययदर्शनात् । उच्यते । तत्प्रतीतिजनकत्वं तात्पर्यम् । गेहे घट इति वाक्यं गेहे घटसंसर्गप्रतीतिजननयोग्यं नतु पटसंसर्गप्रतीतिजननयोग्यमिति तद् वाक्यं घटसंसर्गपरं, नतु पटसंसर्गपरमिति व्यपदिश्यते । ननु सैन्धवमानयेत्यादिवाक्यं यदि लवणानयनप्रतीतीच्छया प्रयुक्तं, तदाऽश्वसंसर्गप्रतीतिजनने स्वरूपयोग्यतासत्त्वाल्लवणपरत्वज्ञानदशायामप्यश्वादिसंसर्गज्ञानापत्तिरिति चेत् । न ।

---

माह — एवमिति । तथाच न वाक्यार्थज्ञानत्वावच्छिन्ने तस्य हेतुत्वम्, अवान्तरवाक्यार्थज्ञाने व्यभिचारादिति भावः । ननु महावाक्यार्थबोधेऽपि न तद्धेतुः, अन्यत्र क्लृप्तकारणादेवोपपत्तौ विशेषकारणकल्पनायोगादित्यत आह — तथैवेति ।

तात्पर्यनिरूपणस्य सङ्गतिं दर्शयति — क्रमप्राप्तमिति । पूर्वपक्षं दर्शयति — तत्रेति । तात्पर्यं निरूपणीय इत्यर्थः । अर्थप्रत्ययाभावेति । शुकोदीरितवाक्यादर्थप्रत्ययो न स्यादित्यपि बोध्यम् । ननु तात्पर्याभावेऽपि तद्भ्रमादर्थप्रत्ययोऽस्त्वित्यत आह — अयमिति । (नचेति । ईश्वरीयतात्पर्यज्ञानादित्यर्थः ?) तदिति । पदार्थवाक्यार्थप्रतीतिजननयोग्यत्वं तात्पर्यमित्यर्थः । अतएवात्र जनकत्वं फलोपहितत्वं, तदा तात्पर्यज्ञाने सति वाक्यार्थप्रतीतिः, तस्यां च सत्यां तात्पर्यज्ञानमित्यन्योन्याश्रयापत्तिरिति दूषणमपास्तम् । उभयतात्पर्यज्ञानस्यापि प्रबोधहेतु(त्वा)त् । अन्यथा गन्धप्रागभाववान् घटो गन्धवानिति विशिष्टवैशिष्ट्यपरवाक्यात् सामानाधिकरण्यबोधापत्तेः । सैन्धवमानयेति लवणानयनपरादश्वसिद्धिप्रसङ्गाच्च । ननु संसर्गतात्पर्यग्रहो न सम्भवति संसर्गस्यापूर्वत्वादिति चेत् । न । सामान्यतस्तद्ग्रहेऽपि तात्पर्यग्रहसम्भवाद्, विशेषतः संसर्गसिद्धेरेव शब्दप्रमाणफलत्वादिति भावः । तात्पर्यमुदाहरति — गेह इति । ननु लवणानयनस्यापि यत्किञ्चिदपेक्षयेतरत्वेन तत्प्रतीतीच्छयानु-

तदितरप्रतीतीच्छयानुच्चरितत्वस्यापि तात्पर्यविशेषणत्वात् । तथाच यद् वाक्यं यत्प्रतीतिजनकस्वरूपयोग्यत्वे सति यदन्यप्रतीतीच्छया नोच्चरितं, तद् वाक्यं तत्संसर्गपरमित्युच्यते । शुकादिवाक्येऽव्युत्पन्नोच्चरितवेदवाक्यादौ च प्रतीतीच्छाया एवाभावेन तदन्यप्रतीतीच्छयोच्चरितत्वाभावेन लक्षणसत्त्वान्नाव्याप्तिः । नचोभयप्रतीतीच्छयोच्चरितेऽव्याप्तिः । तदन्यमात्रप्रतीतीच्छयानुच्चरितत्वस्य विवक्षितत्वात् । उक्त-

---

च्चरितत्वाभावेन तद्वाक्याल्लवणसंसर्गज्ञानमपि न स्यादित्यत आह — तथा चेति । पूर्वोक्ताव्याप्तिमुद्धरति — शुकादिवाक्य इति । ननु सैन्धवमानयेत्यादौ नानार्थे श्वेतो धावतीत्यादौ (शि ? श्लि)ष्टेऽपि लवणादिमात्रतात्पर्यग्रहे लवणादिमात्रान्वयबोधः । तुरगादावपि तात्पर्यग्रहे तुल्यवदुपस्थितौ च युगपदुभयान्वयबोध इत्यनुभवसिद्धः । तत्र तदितरप्रतीतीच्छयानुच्चरितत्वाभावादव्याप्तिरिति चोदयति — नचेति । ननु वाक्यस्यानेकपरत्वमसिद्धं, सकृदुच्चरितस्य सकृत्प्रत्यायकत्वनियमनिश्चयेन विशेषदर्शनाद् , अनेकार्थप्रत्यये वक्तुरिच्छाया असम्भवात् , एकस्य पदस्यैकोच्चारणान्तर्भावेन शक्तिग्रहविषयस्य प्रकारतया स्व(नि)रूपितैकशक्तिविषयमात्रानुभवप्रयोजकत्वमिति व्युत्पत्तेश्चेति चेत् । न । गौरवेण मात्रान्तर्भावेन व्युत्पत्तेरकल्पनात् सकृदुच्चरितस्येत्यादिव्याप्तेरसिद्धेः, तृतीयादिपदे व्यभिचारात् । नच यत्रैकमेव शक्ततावच्छेदकं तत्रैव तथा नियम इति वाच्यम् । अप्रयोजकत्वात् । प्रयोजकत्वे वा तादृशविशेषदर्शनेच्छाया अप्रतिबन्धकत्वात् , बाधितेऽपीच्छादर्शनाद्, विशेषदर्शनस्यासार्वत्रिकत्वाच्च । उक्तविशेषदर्शनेन वक्तुरुभयतात्पर्याभावेऽपि यत्र भ्रमेण श्रोतुर्युगपत् तात्पर्यज्ञानं तत्र युगपदुभयान्वयबोधस्य दुर्वारत्वाच्च । ननूक्तयुक्त्या युगपदुभयतात्पर्यस्य तज्ज्ञानस्य च सम्भवेऽपि न युगपदुभयान्वयबोधः, सकृदुच्चरितात् सकृदर्थप्रत्यय इति व्युत्पत्तिस्वाभाव्यात् । तथाच यत्र वक्तुरुभयान्वयबोध इच्छा तत्र क्रमेण वान्वयबोध आवृत्त्येति चेत् । न । प्रथमे(क ? त)स्यान्वयबोधो न तदन्यस्येति विनिगन्तुमशक्यत्वेन विनिगमनाभावादुभयोरपि ज्ञानमज्ञानं वा स्यात् । तस्माद् यत्र युगपत् तात्पर्यं तत्राव्याप्तिरिति भावः । तदन्येति । तथाच तत्र तदन्यप्रतीतीच्छयोच्चरितत्वेऽपि तदन्यमात्रप्रतीतीच्छयोच्चरितत्वाभावान्नाव्याप्तिरिति भावः । ननु तत्प्रतीतिजननयोग्यत्वघटितं तात्पर्यमुक्तम् । तत्र किं योग्यतावच्छेदकम् । न ताव-

**प्रमितिजननयोग्यतायां चावच्छेदिका शक्तिः । अस्माकं मते सर्वत्र कारणतायां शक्तेरवच्छेदकत्वादिति न कोऽपि दोषः । एवं तात्पर्यस्य तत्प्रतीतिजनकत्वरूपस्य शाब्दज्ञानजनकत्वे चतुर्थवर्णके तात्पर्यज्ञान-हेतुत्वनिराकरणवाक्यं तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्यनिराकरणपरम् । अन्यथा तात्पर्यनिश्चयफलकवेदान्तविचारवैयर्थ्यप्रसङ्गात् । केचित्तु—शाब्दज्ञानत्वावच्छेदेन तात्पर्यज्ञानं न हेतुरित्येवम्परं चतुर्थवर्णक-वाक्यम् । तात्पर्यसंशयविपर्ययोत्तरशाब्दज्ञानविशेषे च तात्पर्यज्ञानं हेतुरेव । इदं वाक्यमेतत्परमुत तदन्यपरमिति संशये तद्विपर्यये च सति, तदुत्तरवाक्यार्थविशेषनिश्चयस्य तात्पर्यनिश्चयं विनाऽनुपपत्तेरित्याहुः । तच्च तात्पर्यं वेदे मीमांसापरिशोधितन्यायादवधार्यते । लोके**

---

दबाधितार्थकत्वं, योग्यताज्ञानस्य पृथग्घेतुत्वं न स्यात् । नापि वाक्यत्वमतिप्रसङ्गादित्यत आह — **उक्तेति** । यद्वा यदि तत्प्रतीतिजननस्वरूपयोग्यत्वं तद् विवक्षितम् । तदावच्छेदकज्ञानं विना तज्ज्ञातुमशक्यमित्यनुगतमवच्छेदकं वाच्यम् । तत्सत्त्वे तदेव तात्पर्यमस्तु, किमनेनेत्यत आह — **उक्तेति** । नन्वत्रेदं विचार्यं — किं तात्पर्यमर्थप्रमितिहेतुः किं वा प्रतिबन्धनिरासे । आद्येऽपि किमज्ञातमुत ज्ञातम् । नाद्यः । तात्पर्यभ्रमाच्छाब्दभ्रमाभावप्रसङ्गात् । द्वितीये पदार्थतात्पर्यं वा संसर्गतात्पर्यं वा । नाद्यः । तस्य वाक्यार्थज्ञानेऽनुपयोगात् । न द्वितीयः । संसर्गस्य पूर्वमनवगमेन तात्पर्यज्ञानायोगादित्यादिना विवरणाचार्यैस्तात्पर्यज्ञानहेतुत्वस्य दूषितत्वेन तद्धेतुत्वव्यवस्थापनमसङ्गतमित्यत आह — **एवमिति** । ननु सामान्यनिषेधपरवाक्यस्य बाधकं विना विशेषनिषेधपरत्वकल्पनमयुक्तमयोगादित्यत आह — **अन्यथेति** । ननु तात्पर्यज्ञानस्याहेतुत्वे विचारवैयर्थ्यमित्यत आह — **तात्पर्येति** । विपर्यय इति । व्यतिरेक इत्यर्थः । तात्पर्यज्ञानजन्यतायां संशयाद्युत्तरशाब्दज्ञानत्वस्यावच्छेदकत्वकल्पनाद् वरं शाब्दज्ञानत्वस्यैव कल्पनं न तद्विशेषे तस्य हेतुत्वमित्यस्वरसं सूचयति — **आहुरिति** । ननु प्रकरणन्यायविभक्त्यादिसमभिव्याहारादीनां शाब्दज्ञानकारणानामनेकेषां सत्त्वात् तत् कथं नोक्तमित्याशङ्क्य तेषां तात्पर्यग्रहेऽन्यथासिद्धत्वादित्याशयेन तात्पर्य(प्रकार? ग्राह)कमाह — **तच्चेति** । **न्यायादिति** । 'कपि-

तु प्रकरणादिना। तत्र लौकिकवाक्यानां मानान्तरावगतार्थकतयानुवादकत्वम्। वेदे तु वाक्यार्थस्यापूर्वतया नानुवादकत्वम्। तत्र लोके वेदे च कार्यपराणामिव सिद्धार्थानामपि प्रामाण्यं, पुत्रस्ते जात इत्यादिषु सिद्धार्थेऽपि पदानां सामर्थ्यावधारणात्। अतएव वेदान्तानां ब्रह्मणि प्रामाण्यम्। यथा चैतत् तथा विषयपरिच्छेदे वक्ष्यते।

तत्र वेदानां नित्यसर्वज्ञपरमेश्वरेण प्रणीतत्वेन प्रामाण्यमिति नैयायिकाः। वेदानां नित्यत्वेन निरस्तसमस्तदूषणाशङ्कतया प्रामाण्यमित्यध्वरमीमांसकाः। अस्माकं तु मते वेदो न नित्यः उत्पत्तिमत्त्वात्। उत्पत्तिमत्त्वं च 'अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदो यजुर्वेदः' इत्यादिश्रुतेः। नापि वेदानां त्रिक्षणावस्थायित्वम्। य एव वेदो

---

ञ्जलानालभेते'त्यादौ सर्वोपादानाशक्यत्वेन बहुवचनस्य प्रथमोपस्थितत्वात् त्रित्व एव पर्यवसानमित्येवमादिरूपतर्कसचिवाद् बहुवचनं त्रित्वादिविशिष्टसंसर्गपरम् अलाक्षणिकबहुवचनत्वादित्यनुमानात् त्रित्वसंसर्गे तात्पर्यमवधार्यत इत्यर्थः। लोके त्विति। कपिञ्जलानानयेत्यादौ पुमभिप्रायनियन्तृतया चतुष्पञ्चादावपि लौकिकवाक्यतात्पर्यसम्भवात् तत्र प्रकरणादिसहकृतप्रमाणात् तत्र तात्पर्यमवधार्यत इत्यर्थः। तत्रेति। लोकवेदयोर्मध्ये इत्यर्थः। ननु कार्यपराणामेव ज्योतिष्टोमादिवाक्यानां प्रामाण्यदर्शनात् सिद्धार्थप्रतिपादकानां घटोऽस्तीत्यादिवाक्यानां कथं प्रामाण्यं, कार्यपरत्वाभावादित्यत आह— तत्रेति। परिणामसरसमाम्रफलं परिणतिविरसं पनसफलमित्यादिरादिशब्दार्थः। ननु तत्त्वमसीत्यादिवाक्यानां ब्रह्मज्ञानकर्तव्यताविधिपरत्वेन प्रामाण्यं न स्यादित्यत्रेष्टापत्तिमाह — अतएवेति। ज्ञानविधिपरत्वे ब्रह्मसिद्धिर्न स्यादिति भावः। ननु ब्रह्मणश्चक्षुराद्यविषयत्वात् कथं वेदान्तानां तत्र प्रामाण्यं, नहि प्रत्यक्षाद्यविषये परिनिष्ठिते वस्तुनि लौकिकवाक्यानां प्रामाण्यमित्यत आह—यथा चैतादिति।

प्रसङ्गाच्छब्दस्य स्थायित्वं व्यवस्थापयितुं परमतं दूषयितुमनुवदति— तत्रेति। परमेश्वरप्रणीतत्वे हेतुमाह — नित्येति। पुंदूषणाभावे हेतुमाह — नित्यत्वेनेति। मीमांसकमतं दूषयति — अस्माकमिति। हेत्वसिद्धिं निराकरोति—उत्पत्तिमत्त्वं चेति। भूतस्य परमेश्वरस्य निःश्वसितं, श्वासवदल्पप्रयत्नेन निर्गता वेदा इत्यर्थः। न्यायमतं दूषयति —नापीति। य एवानुवाको देवदत्तेना-

देवदत्तेनाधीतः स एव मयापीत्यादिप्रत्यभिज्ञाविरोधात् । अतएव गकारादिवर्णानामपि न क्षणिकत्वं, सोऽयं गकार इत्यादिप्रत्यभिज्ञाविरोधात् । तथाच वर्णपदवाक्यसमुदायरूपस्य वेदस्य वियदादिवत् सृष्टिकालीनोत्पत्तिकत्वं प्रलयकालीनध्वंसप्रतियोगित्वं च । नतु मध्ये वर्णानामुत्पत्तिविनाशौ । अनन्तगकारादिकल्पनायां गौरवात् । अनुच्चारणदशायां वर्णानामनभिव्यक्तिस्तूच्चारणरूपव्यञ्जकाभावान्न विरुध्यते । अन्धकारस्थघटानुपलम्भवत् । उत्पन्नो गकार इत्यादिप्रत्यक्षं तु सोऽयं गकार इत्यादिप्रत्यभिज्ञाविरोधादप्रमाणं, वर्णाभिव्यञ्जकध्वनिगतोत्प-

---

धीतः स एव मयापीत्याद्यनुभव आदिशब्दार्थः । ननु यथा वृक्षाणां विनाशेन तत्समूहरूपवनस्यापि विनाशः, तथा वर्णानामाशुतरविनाशित्वेन तत्समुदायरूपपदस्यापि तथात्वमित्याशङ्क्य वर्णानामाशुविनाशित्वमसिद्धमित्याह — अत एवेति । तर्हि नित्यत्वक्षणिकत्वयोरभावे कीदृग्भूतो वेद इत्यत आह— तथाचेति । ननु सृष्टिप्रलययोरन्तराले वर्णानामुत्पत्तिविनाशाङ्गीकारे को विरोधः । नच प्रत्यभिज्ञाविरोधः । पूर्वसर्गे मन्वादिभिर्यो वेदोऽधीतः स एवेदानीमस्माभिरिति प्रत्यभिज्ञाविरोधात् । सर्गाद्यकाले वेदसृष्टिर्न स्यादित्यत आह — नत्विति । तथाच सर्गाद्यकाले वेदसृष्टिश्रवणान्न तथात्वमिति भावः । ननु वेदस्य स्थायित्वेन सर्वदोपलब्धिः स्यादित्यत आह — अनुच्चारणदशायामिति । नन्वत्रापि सृष्टिप्रलययोर्मध्य उत्पन्नो गकार इत्याद्यनुभवात् कथं वर्णानामुत्पादाद्यभाव इत्यत आह — उत्पन्न इति । ननु बाधकाभावात् प्रमात्वं सिद्धमित्यत आह — वर्णाभिव्यञ्जकेति । ननु य एव वेदो देवदत्तेनाधीतः स एवायं मयापीति प्रत्यभिज्ञानात्, शब्दो नित्यः शब्दत्वाद् व्यतिरेकेण घटवदित्यनुमानाद् 'वाचा विरूपनित्यया यावति ब्रह्म विष्ठितं तावति वागि'त्यादिश्रुत्या च,

"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।"

इत्यादिस्मृत्या च वेदानां नित्यत्वावगमात् (तस्मात् ?) नित्यः शब्दः इत्युत्पादादिप्रतीतीनां भ्रमत्वमेवोचितमि'ति प्राप्तेऽभिधीयते । वाचा विरूपनित्ययेत्यस्य 'वृष्णे चोदस्व सुष्टुतिमि'ति वाक्यशेषादग्निस्तुतिपरत्वावगमेन स्वार्थे प्रामाण्याभावात् । नच देवताधिकरणन्यायेन स्वार्थेऽपि प्रामाण्यम् । प्रमाणान्तराविरोध एव तस्य तथात्वात् । प्रकृते च

त्तिनिरूपितपरम्परासम्बन्धविषयकत्वेन प्रमाणं वा। तस्मान्न वेदानां क्षणिकत्वम्। ननु क्षणिकत्वाभावेऽपि वियदादिप्रपञ्चवदुत्पत्तिमत्त्वेन परमेश्वरकर्तृकतया पौरुषेयत्वापत्तौ अपौरुषेयत्वं वेदानामिति तव सिद्धान्तो भज्येतेति चेत् न। नहि पुरुषेणोच्चार्यमाणत्वं पौरुषेयत्वम्। गुरुमतेऽपि पौरुषेयत्वापत्तेः। नापि पुरुषाधीनोत्पत्तिकत्वं पौरुषेयत्वम्। नैयायिकाभिमतपौरुषेयत्वानुमानेऽस्मदादिना सिद्धसाधनतापत्तेः। किन्तु सजातीयोच्चारणानपेक्षोच्चारणविषयत्वम्। तथाच। सर्गाद्यकाले परमेश्वरः पूर्वसर्गसिद्धवेदानुपूर्वीसमानानुपूर्वीकं वेदं विरचितवान्, नतु तद्विजातीयं वेदमिति न सजातीयोच्चारणानपेक्षोच्चारण-

---

"तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे।"

इत्यादिश्रुत्या शब्दोऽनित्यः द्रव्यत्वात् घटवदित्याद्यनुमानाद् वानित्यत्वसिद्धेः। तद्विरोधाद् 'यावति ब्रह्म विष्ठितमि'त्यादिश्रुतेरप्युक्तप्रमाणविरोधेन स्वार्थे प्रामाण्याभावात्। स्मृतेश्च

'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते'

इति स्मृत्यन्तरविरोधेन निर्णयाजनकत्वात्। ऋचः सामानि जज्ञिरे इत्यादिश्रुतिविरोधेन स्मृतेर्दुबलत्वाच्च। अतएव स्मृतिविरोधाधिकरणे 'औदुम्बरीं स्पृष्ट्वोद्गायेदि'ति श्रुतिविरोधेन सर्वौदुम्बरी वेष्टयितव्येति स्मृतेर्दौर्बल्यम्। अतएव स्वयम्भूरेष भगवानित्यादिमहाभागवतपुराणीयवाक्यस्य अन्यत्र तात्पर्यं कल्पयामासुः। सैवेयं गूर्जरीति सेयं गाथा सेयं ज्ञातला तदेवेदं न खमितिवत् प्रत्यभिज्ञाया वेदत्वावच्छिन्नप्रतियोगिकभेदाभावरूपाभेदावगाहनाद् उत्पादादिबहुप्रतीतीनां भ्रमत्वकल्पनागौरवाच्च नाभेदविषयत्वम्। नच वेदानामीश्वरप्रणीतत्वे 'ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यादि'ति वेदानामग्न्यादिभ्यो जन्मश्रवणं कथमुपपद्यत इति वाच्यम्। पूर्वोक्तश्रुत्या वेदानामीश्वरकर्तृत्वावगमे तद्वाक्यस्याधिष्ठातृदेवतापरत्वेन विरोधाभावात्। तस्माद् वेदानां न नित्यत्वं नापि क्षणिकत्वमिति। तदेतत् सर्वमभिप्रेत्योपसंहरति—**तस्मा**दिति। न क्षणिकत्वमित्युपलक्षणम्। नापि नित्यत्वमिति बोध्यम्। तत्र पुरुषेणोच्चार्यमाणत्वं पौरुषेयत्वम् उत पुरुषाधीनोत्पत्तिकत्वं किं वा सजातीयोच्चारणानपेक्षोच्चारणत्वमिति विकल्प्याद्यद्वितीयौ दूषयित्वा तृतीयं परिशिनष्टि—**किन्त्व**ति। अस्त्वेवं, ततः किमित्यत आह—**तथाचे**ति। **ननु**

विषयत्वं पौरुषेयत्वम् । भारतादीनां तु सजातीयोच्चारणमनपेक्ष्यैवो-च्चारणमिति तेषां पौरुषेयत्वम् । एवं पौरुषेयापौरुषेयभेदेन द्विविध आगमो निरूपितः ॥

इति श्रीधर्मराजाध्वरीन्द्रविरचितायां वेदान्तपरिभाषायाम्
आगमपरिच्छेदः ॥

---

## अर्थापत्तिपरिच्छेदः ।

इदानीमर्थापत्तिर्निरूप्यते । तत्रोपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः । तत्रोपपाद्यज्ञानं करणम् । उपपादकज्ञानं फलम् । येन विना यदनुपपन्नं तत् तत्रोपपाद्यम् । यस्याभावे यस्यानुपपत्तिः तत् तत्रोपपादकम् । यथा रात्रिभोजनेन विना दिवा अभुञ्जानस्य पीनत्वमनुपपन्नमिति तादृशपीनत्वमुपपाद्यम् । यथावा रात्रिभोजनस्याभावे तादृश-

---

भारतादीनां पौरुषेयत्वं न स्यात्, समानानुपूर्वीकत्वादित्यत आह — भारतादीनामिति । परमप्रकृतमुपसंहरति — **एवमिति** ।

इति श्रीपेद्दादीक्षितविरचितायां वेदान्तपरिभाषाप्रकाशिकायाम्
आगमपरिच्छेदः ॥

---

### अर्थापत्तिपरिच्छेदः ।

परमतनिराकरणाय प्रकारान्तरेण प्रपञ्चस्य मिथ्यात्वसाधनायार्थापत्तिं निरूपयितुं प्रतिजानीते — **इदानीमिति** । अर्थापत्तिप्रमाणलक्षणमाह — **तत्रेति** । अर्थापत्तिप्रमाणे निरूपणीय इत्यर्थः । अनुपपद्यमानार्थादर्शनात् उपपादनभूतार्थान्तरकल्पनायोगादित्यत उक्तम् — **उपपाद्येति** । अर्थापत्तौ करणं दर्शयति — **तत्रेति** । ननु करणस्य फलवत्त्वनियमात् फलं वक्तव्यम् । तत्राह — **उपपादकेति** । नन्वर्थापत्तौ अन्यथानुपपत्तिज्ञानस्यैव करणत्वात् कथमुपपाद्यज्ञानं करणमित्युक्तम् । तत्राह — **येनेति** । ननु उपपादकत्वस्य शब्दादौ प्रसिद्धतया कथं रात्रिभोजनमुपपादकमित्यत आह — **यस्येति** । आद्यमुदाहरति — **यथेति** । ननु रात्रिभोजनेन विनापि दिवाभोजनमात्रेण पीनत्वमुपपन्नमित्यत उक्तं — **दिवा अभुञ्जानस्येति** । द्वितीयमुदाहरति — **यथावेति** । **तादृशेति** । दिवा अभुञ्जानस्येत्यर्थः । ननु प्रतिपादककल्पकस्याप्यर्थापत्ति-

पीनत्वस्यानुपपत्तिरिति रात्रिभोजनमुपपादकम् । रात्रिभोजनकल्पना-रूपायां प्रमितौ अर्थस्यापत्तिः कल्पनेति षष्ठीसमासेनार्थापत्तिशब्दो वर्तते। कल्पनाकरणे पीनत्वादिज्ञाने त्वर्थस्यापत्तिः कल्पना यस्मादिति बहुव्रीहिसमासेन वर्तते इति फलकरणयोरुभयोस्तत्पदप्रयोगः । सा चार्थापत्तिर्द्विविधा दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति । दृष्टार्थापत्तिर्यथा — इदं रजतमिति पुरोवर्तिनि प्रतिपन्नस्य रजतस्य नेदं रजतमिति तत्रैव निषिध्यमानत्वं सत्यत्वेऽनुपपन्नमिति रजतस्य सद्भिन्नत्वं सत्त्वात्यन्ताभाववत्त्वं वा मिथ्यात्वं कल्पयति । श्रुतार्थापत्तिर्यथा — यत्र श्रूयमाणवाक्यस्य स्वार्थानुपपत्तिमुखेनार्थान्तरकल्पकत्वम् । यथा 'तरति शोकमात्मविदि'त्यत्र श्रुतस्य शोकशब्दवाच्यबन्धजातस्य ज्ञान-निवर्त्यत्वस्यानुपपत्त्या बन्धस्य मिथ्यात्वं कल्प्यते । यथावा जीवी देवदत्तो गृहे नेति वाक्यश्रवणानन्तरं जीविनो गृहासत्त्वं बहिःसत्त्वं

---

पदप्रवृत्तिनिमित्तत्वेन तस्य कल्पनारूपफलाभावात् तत्र तत्पदप्रयोगानुपपत्ति-रित्याशङ्क्य नेदं प्रवृत्तिनिमित्तं, किन्त्वर्थापत्तिप्रमाणलक्षणम् । निमित्तं तु नानैवेत्यभिप्रेत्य फल(करण)योस्तत्पदप्रयोगं समर्थयति — **रात्रिभोजनेति** । रात्रिभोजनस्य(रूप)कल्पनारूपायामित्यर्थः। उपपाद्यमानरूपार्थस्य दृष्टश्रुतभेदेना-र्थापत्तिभेदं दर्शयति — **सा चेति** । आद्यमुदाहरति — **दृष्टेति** । अन्यत्र प्रतिपन्नस्य अन्यत्र निषेध्यत्वं सत्यत्वेऽप्युपपन्नमित्यत उक्तं — **तत्रैवेति** । **अ-नुपपन्नमिति** । सत्यत्वे ब्रह्मवन्निषेधासम्भवादिति भावः । द्वितीयमुदाहरति — **श्रुतेति** । **मिथ्यात्वमिति** । ननु सत्यस्यापि निवृत्तिसम्भवेन मिथ्यात्वं कल्पनीयमिति चेत् । न । ज्ञानस्य सत्यनिवर्तकताभ्युपगमे निवर्त्यताप्रयोजकं वक्तव्यम् । न तावद् विषयगतत्वं प्रयोजकं, नीलो घट इति ज्ञानाद् नैल्यस्यापि निवृत्त्यापत्तेः । नाप्याश्रयगतत्वं, धर्मिधर्मादेरपि निवृत्तिप्रसङ्गात् । नाप्युभयगतत्वं, शरीरज्ञानाद् देहात्मसम्बन्धस्य निवृत्त्यापत्तेः । नन्वनुगतप्रयोजकाभावेऽपि श्रुतितो ज्ञानात् सत्यस्य बन्धस्य निवृत्तिः प्रतीयतामिति चेत् । भ्रान्तोऽसि । नहि श्रुतिः सत्यस्यापि निवृत्तिरिति श्रावयति । किन्त्वौदासीन्येन बन्धनिवृत्तिमात्रम् । तच्च यतो ज्ञानमज्ञानस्यैव निवर्तकमिति न्यायेन बन्धस्यासत्यत्वमेव कल्पयति । नायं न्यायोऽनुपपन्नः । तूलाज्ञानानङ्गीकारवादिमते शुक्तितत्त्वज्ञानस्य रजतनिवर्तकत्वेनाज्ञानानिवर्तकतया व्यभिचारादिति वाच्यम् । तन्मते-

कल्पयति । श्रुतार्थापत्तिश्च द्विविधा — अभिधानानुपपत्तिरभिहिता-नुपपत्तिश्च । तत्र यत्र वाक्यैकदेशश्रवणेऽन्वयाभिधानानुपपत्त्या अन्वयाभिधानोपयोगि पदान्तरं कल्प्यते तत्राभिधानानुपपत्तिः । यथा द्वारमित्यत्र पिधेहीति पदाध्याहारः । यथा वा 'विश्वजिता यजेते'त्यत्र स्वर्गकाम इति पदाध्याहारः । ननु द्वारमित्यादावन्वयाभिधानात् पूर्वमिदमन्वयाभिधानं पिधानोपस्थापकपदं विनानुपपन्नमिति कथं ज्ञान-

---

ऽज्ञानपदस्याज्ञानतत्कार्यान्यतरपरत्वात् । नच ब्रह्मज्ञानेन भेदस्यापि निवृत्तेर्व्यभिचारः । कार्यस्य परतन्त्रपरत्वात् । ननु

"सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति ।"

इति वचनात् सत्यस्य दुरितस्य सेतुदर्शनेन निवृत्तिः, यथा तार्क्ष्यस्मरणं सत्यं विषं नाशयति, यथावा विषयदोषदर्शनं सत्यरागनिवर्तकं, तथा सत्यज्ञानात सत्यस्य निवृत्तिरस्त्विति चेत् । न तावत् सेतुदर्शनमात्राद् दुरितनिवृत्तिरिति स्मृत्यर्थः, तथा सति तत्रत्यम्लेच्छादीनामपि दुरितनिवृत्तिप्रसङ्गात् । अन्धादीनां तदभावप्रसङ्गाच्च । किन्त्वतिदूरदेशागमनच्छत्रपादुकाविधुरस्य कृतोपोषणादिनियमकलापयुक्तस्य सेतुदेशप्राप्त्या कल्मषनिवृत्तिरित्यस्यैव स्मृत्यर्थत्वाद्, ध्यानमन्त्रादिप्रयोगादिक्रियाया एव विषशमयितृत्वाद्, रागनिवर्तकचेतोवृत्त्युदयेन रागनिवृत्तिसम्भवाच्च न तावपि दोषौ । नचैवं पूर्वज्ञाननिवर्तकोत्तरज्ञाने व्यभिचार इति वाच्यम् । ज्ञानत्वेन रूपेण ज्ञानस्यानिवर्तकत्वस्वीकारादिच्छादिसाधारण्येनोत्तरज्ञानस्योत्तरात्मविशेषगुणत्वेन पूर्वज्ञाननिवर्तकत्वात् । यद्यपीष्टसाधनताज्ञानस्येच्छाप्रागभावादिनिवर्तकता ज्ञानत्वगर्भधर्मेणैव, तथापि न प्रमाणज्ञानत्वगर्भधर्मेण । भ्रमादपीच्छाप्रागभावनिवृत्तेः । तस्मादप्रतिबद्धापरोक्षप्रमाणज्ञानस्य यन्निवर्तकता तस्य अज्ञानतत्कार्यान्यतरपरत्वनियमाद् बन्धस्य ज्ञाननिवर्त्यतया मिथ्यात्वसिद्धिः । यथावेति । 'स स्वर्गः सर्वान् प्रत्यविशिष्टत्वादि'ति सूत्रे चतुर्थाध्याये जैमिनिकृते स्वर्गपदाध्याहारस्य साधितत्वादिति भावः । यद्यपि 'यदि सत्रायानवगूर्यजेत' 'विश्वजिता यजेते'त्यादिना सत्रयागसङ्कल्पे कृते राजचोराद्युपद्रवैरसमाप्तौ विश्वजिद्यागस्य प्रायश्चित्ततया विधानात् कथं तत्र स्वर्गफलकल्पनमिति । तथापि कृत्वाचिन्तयास्याभिधानात् । वस्तुतस्तु पिण्डपितृयज्ञादिकमेव मुख्योदाहरणं द्रष्टव्यम् । नन्विति । अन्वयाभिधानस्य तदानीमभावादिति भावः ।

मिति चेत् । न । अभिधानपदेन करणव्युत्पत्त्या तात्पर्यस्य विवक्षितत्वात् । तथाच द्वारकर्मकपिधानक्रियासंसर्गपरत्वं पिधानोपस्थापकपदं विनानुपपन्नमिति ज्ञानं तत्रापि सम्भाव्यते । अभिहितानुपपत्तिस्तु यत्र वाक्यावगतोऽर्थोऽनुपपन्नत्वेन ज्ञातः सन्नर्थान्तरं कल्पयति, तत्र द्रष्टव्यः । यथा स्वर्गकामो ज्योतिष्टोमेन यजेतेत्यत्र स्वर्गसाधनत्वस्य क्षणिकयागगतस्यानुपपत्त्या मध्यवर्त्यपूर्वं कल्प्यते । नचेयमर्थापत्तिरनुमानेऽन्तर्भवितुमर्हति । अन्वयव्याप्त्यज्ञानेनान्वयिन्यनन्तर्भावात् । व्यतिरेकिणश्चानुमानत्वं प्रागेव निरस्तम् । अत एवार्थापत्तिस्थलेऽनुमिनोमीति नानुव्यवसायः । किन्तु अनेनेदं कल्पयामीति । नन्वर्थापत्तिस्थले इद-

---

करणेति । अभिधीयतेऽनेनेत्यभिधानमिति करणव्युत्पत्त्येत्यर्थः । अपूर्वं कल्प्यत इति । नन्वस्मिन् मते देवताप्रीतेरेवावान्तरव्यापारत्वाङ्गीकारात् कथमपूर्वकल्पनम् । तथाहि — भक्तिश्रद्धास्तुत्यादिभिराराधितः प्रसन्नो देवस्तदनुरूपं फलमाराधकाय प्रयच्छतीति तत्प्रीतिरवान्तरव्यापारः । अत एव राजापि पूजानुसरणाद्यनुरोधेनाश्रितानां फलं प्रयच्छतीति प्रसिद्धिर्लोके । नहि पूजादिभिरनुपसाद्यः फलायावकल्पते राजा । तथाच लोके प्रीतिरेवाभिमतफलव्यापारतया दृष्टेति वेदेऽपि तथैव कल्प्यते, नत्वपूर्वम् । दृष्टविरोधात् । अत एव 'यज देवपूजायामि'ति व्याकरणस्मृतिरपि सङ्गच्छते । अत एवाहुराचार्यवाचस्पतयः तृतीयाध्याये द्वितीयपादे 'फलमत उपपत्तेरि'त्यधिकरणे 'तस्माद् दृष्टानुरोधेन देवताराधनात् फलं, नत्वपूर्वात् कर्मणो वा केवलात्, तद्विरोधादि'ति । तस्मादितिहासपुराणप्रामाण्याद् देवताप्रीतिरेवावान्तरव्यापारः, नत्वपूर्वमिति चेत् । न । परमतेनैवापूर्वस्य व्यापारत्वाभिधानादिति । अर्थापत्तेः पृथक् प्रमाणत्वमाक्षिपति—*नचेयमिति । किमत्रान्वयिन्यन्तर्भावोऽभिमतः उत व्यतिरेकिणि । नाद्य इत्याह—अन्वयेति । अन्वयसहचारज्ञानाभावादिति भावः । द्वितीये त्वाह — व्यतिरेकिण इति । नन्वर्थापत्तेः क्लृप्तानुमानप्रमाण एवान्तर्भावोऽस्तु, नतु प्रमाणान्तरत्वं कल्प्यं, गौरवादित्यत आह — अत एवेति । ननु यद्यनुमितित्वावगाह्यनुमित्यनुव्यवसायाभावान्नानुमितित्वं, तदा विजातीयानुव्यवसायाभावान्न विजातीयत्वमपीत्यत आह — किन्त्विति । इतीति ।

---

* 'न चैवमि'ति व्याख्या कोशपाठः ।

मनेन विनानुपपन्नमिति ज्ञानं करणमित्युक्तम् । ननु किमिदं तेन विनानुपपन्नत्वम् । तदभावव्यापकाभावप्रतियोगित्वमिति ब्रूमः । एवमर्थापत्तेर्मानान्तरत्वसिद्धौ व्यतिरेकि नानुमानान्तरम् । पृथिवी इतरेभ्यो भिद्यते इत्यादौ गन्धवत्त्वमितरभेदं विनानुपपन्नमित्यादिज्ञानस्य करणत्वात् । अत एवानुव्यवसायः पृथिव्यामितरभेदं कल्पयामीति ॥

इति श्रीधर्मराजाध्वरीन्द्रविरचितायां वेदान्तपरिभाषायाम्
अर्थापत्तिपरिच्छेदः ॥

---

## अनुपलब्धिपरिच्छेदः ।

इदानीं षष्ठं प्रमाणं निरूप्यते । ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिरूपं प्रमाणम् । अनुमानादिजन्यातीन्द्रियाभावानुभवहेतावनुमानादावतिव्याप्तिवारणायाजन्यान्तम् । अदृष्टादौ साधारणकारणेऽतिव्याप्तिवारणायासाधारणेति । अभावस्मृत्यसाधारणहेतुसंस्कारेऽतिव्याप्तिवारणाय अनुभवेति विशेषणम् । नचाभावानुमितिस्थलेऽप्यनुपलब्ध्यैवाभावो गृह्यताम् अविशेषादिति वाच्यम् ।

---

अनुव्यवसाय इत्यनुषज्यते । ननु रात्रिभोजनं विना पीनत्वस्य प्रत्यक्षेण ज्ञायमानत्वात् कथं तेन विनानुपपत्तिरिति शङ्कते — **नन्विति** । उत्तरमाह — **तदिति** । अर्थापत्तेर्मानान्तरत्वसाधनफलमाह — **एवमिति** । ननु पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ व्यतिरेकव्याप्तिज्ञानस्य करणत्वात् कथमर्थापत्तावन्तर्भाव इत्यत आह — **पृथिवीति** । तत्र विनिगमकमाह — **अत एवेति** ॥

इति श्रीपेद्दादीक्षितविरचितायां वेदान्तपरिभाषाप्रकाशिकायाम्
अर्थापत्तिपरिच्छेदः ॥

---

### अनुपलब्धिपरिच्छेदः ।

अवसरसङ्गत्यानुपलब्धिप्रमाणं निरूपयितुं प्रतिजानीते — **इदानीमिति** । अनुपलब्धेर्लक्षणमाह — **ज्ञानेति** । प्रत्यक्षरूपानुभवासाधारणकारणचक्षुरादावतिव्याप्तिवारणाय अभावेत्युक्तम् । उक्ते विशेषणे नातिव्याप्तिरिति ज्ञापनार्थमनुमानादिजन्येत्युपादानम् । **असाधारणेति** । ज्ञानकरणाजन्याभावानुभवत्वावच्छिन्नकार्यताप्रतियोगिककारणताश्रयत्वम् । अदृष्टस्य जन्यत्वावच्छिन्नकार्यताप्रतियोगिककारणताश्रयत्वाद् न दोष इति भावः । **अविशेषात्** । अभावा-

**धर्माधर्माद्यनुपलब्धिसत्त्वेऽपि तदभावानिश्चयेन योग्यानुपलब्धेरेवाभावग्राहकत्वात् । ननु केयं योग्यानुपलब्धिः । किं योग्यस्य प्रतियोगिनोऽनुपलब्धिः । किं योग्येऽधिकरणे प्रतियोग्यनुपलब्धिः । नाद्यः । स्तम्भे पिशाचादिभेदस्याप्रत्यक्षतापत्तेः । नान्त्यः । आत्मनि धर्माद्यभावस्यापि प्रत्यक्षतापत्तेरिति चेत् न । योग्या च सानुपलब्धिश्चेति कर्मधारयाश्रयणात् । अनुपलब्धेर्योग्यता च तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वम् । यस्याभावो गृह्यते तस्य यः**

---

नुपलब्धौ विशेषाभावादित्यर्थः । अत्रानुपलब्धिमात्रादभावग्रह आपाद्यते, उत योग्यताविशेषितात् । नाद्य इत्याह — **धर्माधर्मेति** । तथाचानुपलब्धिमात्रस्य नाभावग्राहकत्वमिति भावः । द्वितीये त्वाह — **योग्येति** । अभावानुमितिस्थले योग्यानुपलब्धेरभावादिति भावः । योग्यानुपलब्धिरपि न तद्ग्राहिकेति शङ्कते — **नन्विति** । **अप्रत्यक्षतापत्तेरिति** । अनुपलब्धित्वाभावापत्तेरिति भावः । **प्रत्यक्षतेति** । अनुपलब्धित्वापत्तिरित्यर्थः । ननु केयमनुपलब्धेर्योग्यता । न तावत् प्रत्यक्षत्वं, धर्माद्यभावस्याप्यनुपलब्धिप्रसङ्गात् । नापि प्रतियोगितद्व्याप्येतरयावत्तदुपलम्भकप्रतियोग्युपलम्भकसमवधानं, संयोगाद्यभाववति संयोगाभावप्रत्यक्षता न स्यात् । इन्द्रियसंयोगादेः प्रतियोगिना कालिकव्याप्तिसत्त्वेऽपि सम्बन्धिनोस्तदव्याप्यत्वेन उक्तयोग्यतानुपलब्धेरभावाद्, उपलम्भप्रागभावस्यापि प्रतियोग्युपलम्भकत्वाद्, घटतद्व्याप्येन्द्रियसन्निकर्षाद्यतिरिक्तत्वाच्च, तस्य प्रतियोगिस्मरणकाले सम्भवेन घटाभावग्रहाभावप्रसङ्गाच्च, प्रतियोगिमात्रजनकस्य तदुपलम्भप्रागभावस्य तदभावोपलम्भहेतुत्वप्रसङ्गाच्च, मुक्त्यव्यवहितपूर्वकालीनाभावग्रहो न स्यात् । तत्रोपलम्भकप्रागभावाभावाच्च । नच सर्वदोषपरिहारार्थं प्रतियोगितद्व्याप्येत्यत्र व्याप्यपदं तदसाधारणोपलम्भकपरं, प्रागभावसम्बन्धिनोश्चासाधारणकोटिप्रविष्टत्वेन तदितरत्वाभावादिति वाच्यम् । तथासति परमाणुसंप्रयोगाभावस्याप्यनुपलब्धित्वापत्तेः । धर्मत्वाभावस्य घटादौ अनुपलब्धित्वाभावप्रसङ्गाच्चेत्याशङ्क्य योग्यतां निर्वक्ति — **अनुपलब्धेरिति** । अभावाधिकरणे प्रतियोगिसत्त्वस्याप्रसिद्ध्या कथं तत्प्रसञ्जितप्रतियोगिकत्वमित्यत

**प्रतियोगी, तस्य सत्त्वेन अधिकरणे तर्कितेन प्रसञ्जितम् आपादन-योग्यं यत् प्रतियोग्युपलब्धिस्वरूपं यस्यानुपलम्भस्य तत्त्वं तद-नुपलब्धियोग्यत्वमित्यर्थः । तथाहि—स्फीतालोके भूतले यदि घटः स्यात् तदा उपलम्भः स्याद् इत्यापादनसम्भवात् तादृशभूतले घ-टाभावोऽनुपलब्धिगम्यः । अन्धकारे तादृशापादनासम्भवान्नानुपल-ब्धिगम्यता । अतएव स्तम्भे तादात्म्येन पिशाचसत्त्वे स्तम्भवत् प्रत्यक्षतापत्त्या तदभावोऽनुपलब्धिगम्यः । आत्मनि धर्मादिसत्त्वेऽपि अस्यातीन्द्रियतया निरुक्तोपलम्भापादनासम्भवाद् न धर्माद्यभावस्या-नुपलब्धिगम्यत्वम् । ननूक्तरीत्याधिकरणेन्द्रियसन्निकर्षस्थलेऽभावस्या-नुपलब्धिगम्यत्वं त्वदनुमतम् । तत्र क्लृप्तेन्द्रियमेव अभावाकारवृ-त्तावपि करणम् इन्द्रियान्वयव्यतिरेकानुविधानादिति चेत् । न । तत्प्र-तियोग्यनुपलब्धेरपि अभावग्रहे हेतुत्वेन क्लृप्तत्वेन करणत्वमात्रस्य कल्पनाद्, इन्द्रियस्य चाभावेन च समं सन्निकर्षाभावेनाभावग्रहाहेतु-**

---

आह — **तर्कितेति** । .... केवलादप्यधिकरणे प्रतियोगिसत्त्वं न भविष्यति.... सामर्थ्यात् । घटज्ञानदशायां घटानुपल .... तिप्रसङ्गाच्च । किञ्चाधिकरणान्तरे-ऽनुपलब्ध्यान्यत्र घटज्ञानदशायां घटाभावोपलब्धिः स्यादित्यत आह—**यस्ये-ति** । कस्यचिदभावस्यानुपलब्धित्वं कस्यचिन्नेत्येतदुपपादयति — **तथाहीति** । **स्फीतेति** । स्फीतालोकवतीत्यर्थः । **तादृशेति** । व्यञ्जकरूपालोकाभावात् तत्र घटोपलम्भापादनासम्भवादिति भावः । **इन्द्रियेति** । अन्यत्रानुमानिकोऽभाव इति भावः । **क्लृप्तेति** । अनुपलब्धेः करणत्वेन क्वचिदिन्द्रियस्य कल्पनादिति भावः । ननु इन्द्रियस्याभावज्ञानहेतुत्व एव मानाभावात् कुतः करणत्वमित्यत आह — **इन्द्रियेति** । अत्राभावग्रहे अनुपलब्धेः कारणत्वाभावात् करणत्व-मपि नेत्युच्यते, उत तस्याः कारणत्वेऽपि इन्द्रियस्यान्यत्र करणत्वेन क्लृप्तत्वात् तदेवात्रापि करणमिति । नाद्य इत्याह—**प्रतियोगीति** । **क्लृप्तत्वेनेति** । घटो-पलम्भेऽपि घटाभावोपलम्भापत्त्या तदनुपलब्धिहेतुत्वस्यावश्यकत्वात् । अतएव चक्षुःसंयुक्तपृथिवीपरमाण्वादौ जलत्वाद्यभावग्रहो नानुपलब्धिरिति भावः । द्वितीयं दूषयति — **इन्द्रियस्येति** । तथाच कारणत्वाभावेन करणत्वस्य दूर-निरस्तत्वादिति भावः । ननु सन्निकर्षाभावेऽपि अन्वयव्यतिरेकाभ्यामेव हेतुत्वं

त्वाद्, इन्द्रियान्वयव्यतिरेकयोरधिकरणज्ञानाद्युपक्षीणत्वेन अन्यथासिद्धेः। ननु भूतले घटो नेत्याद्यभावानुभवस्थले भूतलांशे प्रत्यक्षत्वमुभयसिद्धमिति तत्र वृत्तिनिर्गमनस्यावश्यकत्वेन भूतलावच्छिन्नचैतन्यवत् तन्निष्ठघटाभावावच्छिन्नचैतन्यस्यापि प्रमात्रभिन्नतया घटाभावस्य प्रत्यक्षतैव सिद्धान्तेऽपीति चेत्। सत्यम्। अभावप्रतीतेः प्रत्यक्षत्वेऽपि तत्करणस्यानुपलब्धेर्मानान्तरत्वात्। नहि फलीभूतज्ञानस्य प्रत्यक्षत्वे तत्करणस्य प्रत्यक्षप्रमाणतानियतत्वमस्ति। दशमस्त्वमसीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वेऽपि तत्करणस्य वाक्यस्य प्रत्यक्षप्रमाणभिन्नप्रमाणत्वाभ्युपगमात्। फलवैजात्यं विना कथं प्रमाणभेद इति चेत्। न। वृत्तिवैजात्यमात्रेण प्रमाणवैजात्योपपत्तेः। तथाच घटाद्यभावाकारा वृत्तिर्नेन्द्रियजन्या इन्द्रियस्य विषयविशेषेणासन्निकर्षात्। किन्तु घटाद्यनुपलब्धिरूपमानान्तरजन्येति भवत्यनुपलब्धेर्मानान्तरत्वम्। ननु अनुपलब्धिरूपमानान्तरपक्षेऽप्यभावप्रतीतेः प्रत्यक्षत्वे घटवति घटाभावभ्रमस्यापि प्रत्यक्षत्वापत्तौ तत्राप्यनिर्वचनीय-

---

सिद्धमित्यत आह—**इन्द्रियेति**। **प्रत्यक्षत्वमिति**। सन्निकर्षसत्त्वादिति भावः। अस्त्वेवं ततः किमित्यत आह—**तत्रेति**। **प्रमात्रभिन्नतयेति**। उपाध्योरेकदेशस्थत्वादिति भावः। किमेतावता अभावग्रहस्य प्रत्यक्षत्वमुच्यते, उतानुपलब्धेः प्रमाणान्तरत्वं निराक्रियत इति विकल्प्याद्यमङ्गीकरोति—**सत्यमिति**। अङ्गीकृतमंशमाह—**अभावेति**। द्वितीये त्वाह—**तदिति**। ननु अनुपलब्धिः प्रत्यक्षप्रमाणान्तर्गता प्रत्यक्षज्ञानजनकत्वात्, चक्षुरादिवदित्याशङ्क्याह—**नहीति**। व्यभिचारेण दूषयति—**दशमस्त्वमसीति**। ननु फलवैलक्षण्येनैव करणवैलक्षण्यस्य करणान्तरे दर्शनात् तद्विरुद्धमिदमिति चोदयति—**फलेति**। वृत्तिप्रतिफलितचैतन्यमित्यर्थः। लाघवेन वृत्तिवैजात्यकृतमेव प्रमाणवैजात्यं, ननु तदवच्छिन्नचैतन्यवैजात्यकृतमित्यत आह—**नेति**। ननु प्रकृतेऽधिकरणाभावाकारवृत्तेरेकतया कथं प्रमाणवैजात्यमित्यत आह—**तथा चेति**। अभावग्रहस्य प्रत्यक्षत्वमुक्तमाक्षिपति—**नन्विति**। **तत्रापीति**। प्रत्यक्षस्य स्वस(वा?म)यवर्तिपदार्थविषयत्वनियमादिति भावः। तत्र मायोपादानं, नवा।

घटाभावोऽभ्युपगम्येत । न चेष्टापत्तिः । तस्य मायोपादानकत्वेऽभावत्वानुपपत्तिः । मायोपादानकत्वाभावे मायायाः सकलकार्योपादानत्वानुपपत्तिरिति चेत् । न । घटवति घटाभावभ्रमो न तत्कालोत्पन्नघटाभावविषयकः । किन्तु भूतले रूपादौ विद्यमानो लौकिको घटाभावो भूतल आरोप्यत इत्यन्यथाख्यातिरेव । आरोप्यसन्निकर्षस्थले सर्वत्रान्यथाख्यातेरेव व्यवस्थापनात् । अस्तु वा प्रतियोगिमति तदभावभ्रमस्थले तदभावस्यानिर्वचनीयत्वम् । तथापि तदुपादानं मायैव, नह्युपादानोपादेययोरत्यन्तसाजात्यं, तन्तुपटयोरपि तन्तुत्वपटत्वादिना वैजात्यात् । यत्किञ्चित्साजात्यस्य मायाया अनिर्वचनीयघटाभावस्य च मिथ्यात्वधर्मस्य विद्यमानत्वात् । अन्यथा व्यावहारिकं घटाद्यभावं प्रति कथं मायोपादानमिति कुतो न शङ्केथाः । नच विजातीययोरप्युपादानोपादेयभावे ब्रह्मैव जगदुपादानं स्यादिति वाच्यम् । प्रपञ्चभ्रमाधिष्ठानत्वरूपस्य तस्येष्टत्वात् । परिणामित्वरूपोपादानत्वस्य निरवयवे ब्रह्मण्यनुपपत्तेः । तथाच प्रपञ्चस्य परिणाम्युपादानं माया न ब्रह्मेति सिद्धान्त इत्यलं प्रसङ्गादागतप्रपञ्चेन ।

स चाभावश्चतुर्विधः । प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावो-

---

आद्य आह — **तस्येति** । कार्यकारणयोः साजात्यस्य मृद्धटयोरनुभूयमानत्वाद् मायोपादेयस्याभावस्य मायावद् भावत्वापत्तेरिति भावः । द्वितीये त्वाह— **मायेति** । तर्हि निर्विषयमभावज्ञानं स्यादित्यत आह — **किन्त्विति** । तर्ह्यनिर्वचनीयख्यातिर्न सिध्येदित्याशङ्क्याह — **आरोप्येति** । नन्वभावस्येन्द्रियसन्निकर्षसत्त्वे तद्ग्रहे इन्द्रियमेव करणं स्यात्, नत्वनुपलब्धिः । तदसत्त्वेऽन्यथाख्यातिरयोगाद् आरोप्यस्याभावस्यासन्निकृष्टत्वादित्यस्वरसादाह —**अस्तु वेति** । ननु मायाया उपादानत्वेन तत्कार्यस्य तत्सजातीयत्वं स्यादित्याशङ्क्य किमुपादानोपादेययोरत्यन्तसाजात्यं विवक्षितम्, उत यत्किञ्चित् । आद्यं दूषयति — **नहीति** । द्वितीये त्वाह — **यत्किञ्चिदिति** । विपक्षे बाधकमाह — **अन्यथेति** । किं विवर्ततया ब्रह्मोपादानम् उत परिणामितया । आद्य आह — **प्रपञ्चेति** । द्वितीये त्वाह — **परिणामित्वरूपोपादानत्वस्येति** । उक्तार्थे सम्मतिमाह — **तथाचेति** ।

अभावं विभजते — **स चेति** । प्रागभावस्य लक्षणमाह — **मृत्पि-**

**ऽन्योन्याभावश्चेति । मृत्पिण्डादौ कारणे कार्यस्य घटादेरुत्पत्तेः पूर्वं योऽभावः स प्रागभावः । स च भविष्यतीति प्रतीतिविषयः । तत्रैव घटस्य मुद्गरपातानन्तरं योऽभावः स प्रध्वंसः । प्रध्वंसस्यापि स्वाधिकरणकपालनाशेन नाश एव । नच घटोन्मज्जनापत्तिः । ध्वंसध्वंसस्यापि घटप्रतियोगिकध्वंसत्वात् । अन्यथा प्रागभावध्वंसात्मकघटस्य विनाशे प्रागभावोन्मज्जनापत्तिः । नचैवमपि यत्र ध्वंसाधिकरणं नित्यं तत्र कथं ध्वंसनाश इति वाच्यम् । तादृशमधिकरणं यदि चैतन्यव्यतिरिक्तं तदा तस्य नित्यत्वमसिद्धम् । ब्रह्मव्यतिरिक्तस्य सर्वस्य**

---

ण्डादाविति । अन्योन्याभावस्यापि प्रागभावत्वनिरासाय कारण इत्युक्तम् । कारणमात्रवृत्तीत्यर्थः । तथाचान्योन्याभावः स्वप्रतियोगिकारण एवेति नियमो नास्ति । स्वप्रतियोगिककारणव्यतिरिक्तसर्वपदार्थेषु विद्यमानत्वात्, प्रागभावस्य स्वप्रतियोगिकारण एव वृत्तेरिति भावः । घटप्रागभावाभिप्रायेण मृत्पिण्डघटपदयोरुपादानम् । तथापि प्रध्वंसेऽतिव्याप्तिः । प्रागभाववत् तस्यापि स्वप्रतियोगिसमानदेशत्वात् । अत उक्तम् — **उत्पत्तेः पूर्वमिति** । प्रागभावे प्रमाणमाह — **स चेति** । ननु भविष्यतीति बुद्धिः घटादेर्भविष्यत्कालसम्बन्धमेव विषयीकरोतीति चेत् । तदपेशलम् । विद्यमानप्रागभावप्रतियोगित्वस्यैव भविष्यच्छब्दार्थत्वात् । उत्पन्नस्य कालान्तरसम्बन्धज्ञानेऽपि भविष्यतीति बुद्धिप्रयोगयोरभावाच्च । अत एव देवदत्तः पण्डितो भविष्यतीत्यत्र पाण्डित्यमात्रस्यैव तत्र भविष्यत्ता, नतु देवदत्तस्येति भावः । नच प्रागभावोऽविनाशी अविनाशित्वे भावाभावयोरेकत्र विरोधात् कार्योत्पत्त्यनुपपत्तेरिति भावः । प्रध्वंसाभावस्य लक्षणमाह — **तत्रैवेति** । कारण इत्यर्थः । तेनात्यन्तान्योन्याभावयोर्व्यवच्छेदः । प्रागभावनिरासार्थं मुद्गरपातानन्तरमिति । प्रध्वंसस्याविनाशे अद्वैतभङ्गापत्तेरित्यत आह — **प्रध्वंसस्यापीति** । **नचेति** । अभावाभावस्य भावत्वनियमादिति भावः । नियमोऽसिद्ध इत्याह — **ध्वंसेति** । विरोधिनः सत्त्वान्न घटोन्मज्जनापत्तिरिति भावः । **अन्यथेति** । ध्वंसध्वंसस्य प्रतियोगिप्रतियोगित्वभाव इत्यर्थः । **नचेति** । अद्वैतविरोधादिति भावः । ध्वंसाधिकरणं किं चैतन्यव्यतिरिक्तमुत चैतन्यम् । नाद्य इत्याह — **तादृशमिति** । वक्ष्यमाणत्वादिति । प्रयोजनपरिच्छेद इति शेषः । द्वितीये त्वाह — **यदि चेति** । चैतन्यस्य निर्धर्मकत्वादिति भावः । ध्वंसस्याधिष्ठानरूपत्वे सम्म-

ब्रह्मज्ञाननिवर्त्यताया वक्ष्यमाणत्वात् । यदि च ध्वंसाधिकरणं चैतन्यं, तदा असिद्धिः । आरोपितप्रतियोगिकप्रध्वंसस्याधिष्ठाने प्रतीयमानस्याधिष्ठानमात्रत्वात् । तदुक्तम् —

"अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः ।"

इति । एवं शुक्तिरूप्यनाशोऽपीदमवच्छिन्नचैतन्यमेव । यत्राधिकरणे यस्य कालत्रयेऽप्यभावः सोऽत्यन्ताभावः । यथा वायौ रूपात्यन्ताभावः । सोऽपि वियदादिवद् ध्वंसप्रतियोग्येव । इदमिदं नेति प्रतीतिविषयोऽन्योन्याभावः । अयमेव विभागो भेदः पृथक्त्वं चेति व्यवह्रियते, भेदातिरिक्तपृथक्त्वादौ प्रमाणाभावात् । अयं चान्योन्याभावोऽधिकरणस्य सादित्वे सादिः । यथा घटे पटभेदः । अधिकरणस्यानादित्वेऽनादिरेव । यथा जीवे ब्रह्मभेदः । ब्रह्मणि वा जीवभेदः । द्विविधोऽपि भेदः ध्वंसप्रतियोग्येव । अविद्यानिवृत्तौ तत्परतन्त्राणां निवृत्त्यवश्यम्भावात् । पुनरपि भेदो द्विविधः, सोपाधिको निरुपाधिकश्चेति । तत्रोपाधिसत्ताव्याप्यसत्ताकत्वं सोपाधिकत्वम् । तच्छून्यत्वं निरुपाधिकत्वम् । तत्राद्यो यथा एकस्यैवाकाशस्य घटाद्युपाधिभेदेन भेदः । यथावा एकस्य सूर्यस्य जलभाजनभेदेन भेदः । यथा एकस्यैव ब्रह्मणोऽन्तःकरणभेदाद् भेदः । निरुपाधिकभेदो यथा घटे पटभेदः । ननु ब्रह्मण्यपि प्रपञ्चभेदाभ्युपगमेऽद्वैतविरोधः । न । तात्त्विकभेदादेरनभ्युपगमेन वियदादिवदद्वैताव्याघातकत्वात् । तदुक्तं सुरेश्वराचार्यैः —

---

तिमाह — तदुक्तमिति । उक्तमर्थमन्यत्राप्यतिदिशति — एवमिति । अत्यन्ताभावस्य लक्षणमाह — यत्रेति । अत्रान्योन्याभावस्यापि त्रैकालिकत्वात् तत्रातिव्याप्तिवारणाय संसर्गेति विशेषणं बोध्यम् । उदाहरति — यथेति । ननु विभागादेरप्यभावान्तरस्य विद्यमानत्वात् कथं चातुर्विध्याभिधानमित्यत आह — अयमेवेति । अतएव विभागादेर्गुणत्वमपि प्रत्युक्तम् । सादित्वानादित्वाभ्यामन्योन्याभावं विभजते — अयमिति । आद्य उदाहरणत्रयमाह — तत्रेति । जलभाजनेति । जलपात्रभेदेनेत्यर्थः । द्वितीयमुदाहरति — निरु-

"अक्षमा भवतः केयं साधकत्वप्रकल्पने ।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम् ॥"

इति । अत एव विवरणेऽविद्यानुमाने प्रागभावव्यतिरिक्तत्वविशेषणं तत्त्वप्रदीपिकायामविद्यालक्षणे भावत्वविशेषणं च सङ्गच्छते । एवञ्च चतुर्विधाभावानां योग्यानुपलब्ध्या प्रतीतिः । तत्रानुपलब्धिर्मानान्तरमिति ।

एवमुक्तानां प्रमाणानां प्रामाण्यं स्वत एवोत्पद्यते ज्ञायते च । तथाहि—स्मृत्यनुभवसाधारणसंवादिप्रवृत्त्यनुकूलं तद्वति तत्प्रकारकत्वं प्रामाण्यम् । तच्च ज्ञानसामान्यसामग्रीप्रयोज्यम् । नत्वधिकं गुण-

---

पाधिकेति । **अक्षमेति** । किमद्वितीयात्मनः साधकत्वकल्पनायां केयमसहिष्णुता, किं तत्रैव समस्तप्रपञ्चं कल्पितं (न) पश्यसीति योजना । अत्रास्मदेकदेशी प्रागभावो (ना)स्तीति मन्यते । तं विवरणविरोधेन प्रतिक्षिपति — **अत एवेति** । तस्य मतान्तरपरतया व्याख्यानस्यायुक्तत्वादिति भावः । **अविद्येति**। स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमिति साध्यविशेषणत्वेन तस्योपादानादिति भावः । **भावत्वेति** । प्रागभावानङ्गीकारे भावत्वविशेषणवैयर्थ्यापत्तेरिति भावः । परिच्छेदार्थमुपसंहरति — **एवञ्चेति** ।

प्रसङ्गादाह— **एवमिति** । 'प्राहुः प्रामाण्यं वेदवादिनः, प्रमाणत्वं स्वतः प्राहुः परतश्चाप्रमाणतामि'ति वादिविवाददर्शनेन स्वाभिमतप्रामाण्यस्वतस्त्वं साधयितुमुपक्रमते — **एवमिति** । प्रमाणपदं भावव्युत्पत्त्या प्रमितिपरं बोध्यम् । नन्वत्र किमिदं प्रामाण्यं विशेष्यावृत्त्यप्रकारकत्वादिकं वा, तद्वति तत्प्रकारकत्वानुभवत्वं वा । नाद्यः । विशेष्यावृत्त्यप्रकारकत्वादिघटकविशेषणस्य प्रागनुपस्थितत्वेन ग्रहीतुमशक्यत्वाद् गौरवाच्च । न द्वितीयः । स्मृतेरप्रामाण्यप्रसङ्गादित्याह — **तथाहीति** । ननु प्रामाण्यं स्वत एवोत्पद्यत इति कोऽर्थः, स्वतो जायते वा स्वाश्रयभूतज्ञानाद् वा । नाद्यः । स्वस्य स्वहेतुत्वविरोधात् । न द्वितीयः । ज्ञानस्य गुणत्वेन स्वप्रामाण्यं प्रति समवायिकारणत्वासम्भवादित्यत आह — **तच्चेति** । उक्तप्रामाण्यमित्यर्थः । प्रयोज्यं जन्यमित्यर्थः । यद्वा ज्ञानसामान्यसामग्रीनिरूपितकार्यतावच्छेदकमित्यर्थः । ननु

मपेक्षते, प्रमामात्रेऽनुगतगुणाभावात्। नापि प्रत्यक्षप्रमायां भूयोवयवे- न्द्रियसन्निकर्षः। रूपादिप्रत्यक्षे आत्मप्रत्यक्षे च तदभावात्। सत्यपि तस्मिन् पीतः शङ्ख इति प्रत्यक्षस्य भ्रमत्वाच्च। अत एव न सल्लिङ्गप- रामर्शादिकमपि अनुमित्यादिप्रमायां गुणः। असल्लिङ्गपरामर्शादिस्थले च विषयाबाधेनानुमित्यादेः प्रमात्वात्। नचैवमप्रमापि प्रमा स्याद्, ज्ञानसामान्यसामग्र्या अविशेषादिति वाच्यम्। दोषाभावस्यापि हेतु- त्वाङ्गीकारात्। नचैवं परतस्त्वम्। आगन्तुकभावकारणापेक्षायामेव पर- तस्त्वात्। ज्ञायते च प्रामाण्यं स्वतः। स्वतो ग्राह्यत्वं च दोषाभावे सति

---

प्रामाण्यं कार्यतावच्छेदकं बाधकाभावे सति कार्यमात्रवृत्तिधर्मत्वाद् अप्रमात्ववदित्यनुमानेन प्रामाण्यस्यावच्छेदकत्वे सिद्धे गुणप्रयोज्यत्वावश्यकतया तस्य परतस्त्वमेवास्ताम्, अन्यथा अप्रामाण्यस्यापि परतस्त्वानापत्तेरित्याशङ्क्य किं परतस्त्वसाधने तात्पर्यम्, उत स्वतस्त्वनिराकरणे। नाद्यः, अप्रयोजकत्वादित्याह — नत्विति। नन्वनुगतकार्यस्यानुगतकरणजन्यत्वनियमात् प्रमाया गुणजन्यत्वाभावे प्रमात्वमेव न स्यादित्याशङ्क्य किं प्रमामात्रेऽनुगतगुणापेक्षा, उत तत्तत्प्रमायाम्। नाद्य इत्यह — प्रमामात्र इति। द्वितीयेऽपि प्रत्यक्षप्रमायां विशेषदर्शनं गुणो वा, भूयोवयवेन्द्रियसन्निकर्षो वा। नाद्यः। प्राथमिकघटादिप्रत्यक्षे तदभावादित्यभिसन्धाय द्वितीयं व्यतिरेकमुखेन दूषयति — नापीति। अन्वयव्यभिचारमाह—सत्यपीति। ननु प्रत्यक्षेऽनुगतगुणाभावेऽपि अनुमितौ सल्लिङ्गपरामर्शादि गुणो भवत्वित्यत आह — अत एवेति। प्रथमादिपदेन वक्तुर्यथार्थवाक्यार्थज्ञानादिर्गृह्यते। द्वितीयेन तु शाब्दज्ञानादिकमिति भावः। (अ)सल्लिङ्गेति। वह्निमति पर्वते बाष्पे धूमभ्रमाज्जायमानानुमितेः प्रमात्वेन सल्लिङ्गपरामर्शो न गुण इति भावः। ग(न्धे? न्ध)प्रागभावादिविशिष्टपक्षकानुमाने सल्लिङ्गपरामर्शसत्त्वेऽपि प्रमाणत्वादर्शनादित्यपि बोध्यम्। भ्रान्तप्रतारकवाक्यजन्यज्ञानस्यापि प्रमात्वदर्शनान्न वक्तृज्ञानमपि गुण इति भावः। प्रामाण्यस्य स्वतस्त्वाङ्गीकारेऽतिप्रसङ्गान्न स्वतस्त्वमिति द्वितीयपक्षमाशङ्क्य निराकरोति — नचैवमिति। परतस्त्वमिति। ज्ञानसामान्यसामग्र्यतिरिक्तकारणप्रयोज्यत्वस्य परतस्त्वादिति भावः। प्रामाण्यस्योत्पत्तौ स्वतस्त्वं प्रसाध्य ज्ञप्तौ तदाह— ज्ञायते चेति। प्रामाण्यस्य ज्ञानभिन्नत्वेन कथं स्वतो ग्राह्यत्वमित्यत आह — स्वत

**यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वम् । स्वाश्रयो वृत्तिज्ञानम् । तद्ग्राहकं साक्षिज्ञानम् । तेन वृत्तिज्ञाने गृह्यमाणे तद्गतं प्रामाण्यमपि गृह्यते । नचैवं प्रामाण्यसंशयानुपपत्तिः । तत्र संशयानुरोधेन दोषस्यापि सत्त्वेन दोषाभावघटितस्वाश्रयग्राहकाभावेन तत्र प्रामाण्यस्यैवाग्रहात् । यद्वा । यावत्स्वाश्रयग्राहकग्राह्यत्वयोग्यत्वं स्वतस्त्वम् । संशयस्थले च प्रामाण्यस्योक्तयोग्यतासत्त्वेऽपि दोषवशेनाग्रहान्न संशयानुपपत्तिः । अप्रामाण्यं तु न ज्ञानसामान्यसामग्रीप्रयोज्यं, प्रमायामप्यप्रामाण्यापत्तेः । किन्तु दोषप्रयोज्यम् । नाप्यप्रामाण्यं यावत्स्वाश्रयग्राहकग्राह्यम्, अप्रामाण्यघटकतदभाववत्त्वादेः वृत्तिज्ञानानुपनीतत्वेन साक्षिणा ग्रही-**

---

इति । घटज्ञानग्राहकेण पटज्ञानप्रामाण्याग्रहाद् बाध इति ज्ञानपदं विहाय **स्वाश्रये**त्युक्तम् । तार्किकैरपि प्रामाण्यस्य स्वाश्रयग्राहकानुमानग्राह्यत्वाभ्युपगमेन सिद्धसाधनं स्यादित्याशङ्कानिराकरणार्थं यावदित्युक्तम् । तथाच तैर्ज्ञान-**ग्राहकेण** घटज्ञानवानहमित्यनुव्यवसायेन प्रामाण्यग्रहानङ्गीकारान्न दोष इति भावः । ननु प्रामाण्यस्य स्वाश्रयवृत्तिज्ञानग्राह्यत्वाभावेन बाधापत्तेरित्यत आह— **ग्राहके**ति । अत्र यावत्पदमशेषपरं, नत्वनेकाशेषपरम् । तेन यत्रैकैव प्रामाण्यग्रहसामग्री तत्र न बाध इति द्रष्टव्यम् । सामग्रीपदं स्पष्टार्थम् । ननु यावत्स्वाश्रयग्राह्यत्वमेव स्वतस्त्वमस्तु, ग्राहकपदं व्यर्थमित्याशङ्क्य स्वतस्त्वमुपपादयति — **स्वाश्रय** इति । **एव**मिति । प्रामाण्यस्य स्वतस्त्व इत्यर्थः । ननु यदि प्रामाण्यस्य दोषाभावे सति यावत्स्वाश्रयग्राहकग्राह्यत्वं स्वतस्त्वं, तदा यावदात्मग्राहकग्राह्यत्वं नित्यत्वादेरपि स्यात् । नचैवमात्मादौ नित्यत्वादिसंशयो न स्यात् । तद्धेतुधर्मज्ञाने तस्य निश्चयादिति वाच्यम् । अनित्यत्वग्राहकदोषाभावे सति यावदात्मग्राहकग्राह्यत्वस्य विवक्षितत्वात्, संशयादिस्थले तद्धेतुदोषस्यावश्यकत्वादित्यरुचेराह — **यद्वे**ति । तथाचास्मिन् पक्षे नित्यत्वादेरपि यावदात्मग्राहकग्राह्यत्वयोग्यत्वमिष्टमेव । नचैतत् प्रामाण्येऽपीष्टं वक्तुं शक्यं, यावदनुव्यवसायेन व्यवसायेन वा कदाचिदपि प्रामाण्यग्रहानङ्गीकारात् । अङ्गीकारे वा पर्यवसितं विवादेनेति भावः । एवं प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च स्वतस्त्वं प्रसाध्याप्रामाण्यस्योभयत्र परतस्त्वमाह — **अप्रामाण्यं त्वि**ति । नन्वप्रा-

तुमशक्यत्वात्, किन्तु विसंवादिप्रवृत्त्यादिलिङ्गकानुमित्यादिविषय इति परत एवाप्रामाण्यमुत्पद्यते ज्ञायते चेति ॥

इति श्रीधर्मराजाध्वरीन्द्रविरचितायां वेदान्तपरिभाषायाम्
अनुपलब्धिपरिच्छेदः ॥

---

## विषयपरिच्छेदः ।

एवं निरूपितानां प्रमाणानां प्रामाण्यं द्विविधं व्यावहारिकतत्त्वावेदकत्वं परमार्थतत्त्वावेदकत्वं चेति । तत्र ब्रह्मस्वरूपावगाहिप्रमाणव्यतिरिक्तानां सर्वप्रमाणानामाद्यं प्रामाण्यं, तद्विषयाणां व्यवहारदशायां बाधाभावात् । द्वितीयं तु जीवब्रह्मैक्यपराणां 'सदेव सोम्येदमग्र आसीदि'त्यादीनां तत्त्वमसीत्यन्तानाम् । तद्विषयस्य जीवपरैक्यस्य कालत्रयाबाध्यत्वात् । तच्चैक्यं तत्त्वम्पदार्थज्ञानाधीनज्ञानमिति प्रथमं तत्पदार्थो

---

माण्यस्य स्वतस्त्वाभावे कथं तद्ग्रह इत्यत आह — विसंवादीति । विमता प्रवृत्तिरप्रमाजन्या विसंवादिप्रवृत्तित्वाद् इत्यनुमानाद् गृह्यत इत्यर्थः । अप्रामाण्यस्य परतस्त्वोपपादनमुपसंहरति — इतीति ।

इति श्रीपेद्दादीक्षितविरचितायां वेदान्तपरिभाषाप्रकाशिकायाम्
अनुपलब्धिपरिच्छेदः ॥

---

### विषयपरिच्छेदः ।

अवसरसङ्गत्या जीवब्रह्मैक्यनिरूपणाय प्रसङ्गं सम्पादयति—एवमिति । व्यावहारिकेति । संसारदशायामबाधितार्थप्रतिपादकमित्यर्थः । परमार्थेति । कालत्रयाबाध्यमित्यर्थः । व्यतिरिक्तानामिति । प्रत्यक्षादिप्रमाणानामित्यर्थः । (ऐक्यपराणा)मिति । प्रामाण्यमित्यनुषज्यते । तत्र हेतुमाह — तद्विषयस्येति । तत्त्वम्पदार्थनिरूपणे हेतुमाह — तच्चेति । जीवपरैक्यमित्यर्थः । इतिशब्दो हेत्वर्थः । यस्मादैक्यं तत्त्वम्पदार्थज्ञानाधीनं तस्मादित्यर्थः । तत्त्वमसीति श्रौतक्रमानुसारेण तत्पदार्थं निरूपयितुं प्रतिजानीते — प्रथममिति । निरू-

लक्षणप्रमाणाभ्यां निरूप्यते। तत्र लक्षणं द्विविधं, स्वरूपलक्षणं तटस्थलक्षणं चेति। तत्र स्वरूपमेव लक्षणं स्वरूपलक्षणम्। यथा 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यत्र सत्यादिकं स्वरूपलक्षणम्। ननु स्वस्य स्ववृत्तित्वाभावे कथं लक्षणत्वमिति चेत्। न। स्वस्यैव स्वापेक्षया धर्मधर्मिभावकल्पनया लक्षणत्वसम्भवात्। तदुक्तम्—"आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः, अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते" इति। तटस्थलक्षणं नाम—यावल्लक्ष्यकालमनवस्थितत्वे सति यद् व्यावर्तकं तदेव। यथा गन्धवत्त्वं पृथिवीलक्षणम्। महाप्रलये परमाणुषु, उत्पत्तिकाले घटादिषु च गन्धाभावात्। प्रकृते च जगज्जन्मादिकारणत्वम्। अत्र

---

पणप्रकारमाह — लक्षणेति। लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरिति न्यायादिति भावः। तत्रेति। लक्षणप्रमाणयोर्मध्य इत्यर्थः। 'अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीय' इति न्यायेन स्वरूपलक्षणं लक्षयति — तत्रेति। लक्ष्यस्य लक्षणानुगतिं दर्शयति — यथेति। सत्यं कालत्रयाबाध्यम्। ज्ञानं चैतन्यरूपम्। अनन्तं कालदेशवस्तुतो भेदशून्यम्। कथमिति। असाधारणधर्मो लक्षणमिति तल्लक्षणत्वादिति भावः। स्वस्यैव धर्मधर्मिभावकल्पनायामध्यासग्रन्थीयपञ्चपादिकाचार्यसम्मतिमाह — तदुक्तमिति। अहं सुखीत्यनुभवादानन्दवत्त्वम्। अहमनुभवामीत्यनुभवादनुभवाश्रयत्वम्। 'अजो नित्य' इत्यादिश्रुत्या नित्यत्वं चेति भावः। इतिशब्दः प्रभृत्यर्थः। तेन सत्यादीनां ग्रहणम्। ननु 'यदेष आकाश आनन्दो न स्यात्' 'सत्यं ज्ञानमनन्तमि'त्यादिश्रुत्या ब्रह्मणो ज्ञानानन्दात्मकत्वप्रतिपादनात् 'साक्षी चेता केवलो निर्गुणश्चे'त्यादिश्रुत्या निर्गुणत्वप्रतिपादनाच्च न ब्रह्मणो धर्मवत्त्वमित्याशङ्क्याह—अपृथक्त्वेऽपीति। नचापृथग्भूतानां पृथग्भाव इति वाच्यम्, अन्तःकरणाद्युपाधिवशादित्याशयात्। स्वरूपलक्षणातिप्रसङ्गवारणाय सत्यन्तम्। सर्वदाविद्यमानस्य कथं व्यावर्तकत्वमित्यत आह—यावदिति। कदाचिदनवस्थितत्वमित्यर्थः। स्वरूपादेः पृथिवीलक्षणत्वं व्यावर्तयति— व्यावर्तकमिति। वैशेषिकमतेनोदाहरणमाह — यथेति। तेन परमाणोरनङ्गीकारात् कथं तत्र लक्षणप्रदर्शनम्। कथं वोत्पत्तिकाले गन्धाभावः। 'उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठती'ति न्यायस्य प्रक्रियामात्रत्वाद्, न सिद्धान्ते। गुणगुणिनोः समानकालीनत्वाभ्युपगमादिति दूषणद्वयं लग्नं वेदितव्यम्। स्वमतेनोदाहरणमाह—प्रकृते

जगत्पदेन कार्यजातं विवक्षितम् । कारणत्वं च कर्तृत्वम् । अतोऽवि-द्यादौ नातिव्याप्तिः । कर्तृत्वं च तत्तदनुकूलतत्तदुपादानगोचरापरोक्ष-ज्ञानचिकीर्षाकृतिमत्त्वम् । ईश्वरस्य तावदुपादानगोचरापरोक्षज्ञानस-द्भावे 'यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः, तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत' इत्यादिश्रुतिर्मानम् । तादृशचिकीर्षासद्भावे च 'सोऽकामयत बहु स्यां प्रजायेये'त्यादिश्रुतिर्मानम् । तादृशकृतौ च 'त-न्मनोऽकुरुते'त्यादिवाक्यम् । ज्ञानेच्छाद्यन्यतमगर्भं लक्षणत्रितयं विव-क्षितम् । अन्यथा व्यर्थविशेषणत्वापत्तेः । अतएव जन्मस्थितिध्वंसाना-

---

चेति । जगज्जन्मादिकारणत्वम् । ब्रह्मणस्तटस्थलक्षणमिति शेषः । अत्रादि-शब्देन स्थितिध्वंसयोर्ग्रहणम् । ननु यत्किञ्चिज्जगज्जन्मादिकारणत्वं वा, सकल-जगज्जन्मादिकारणत्वं वा । नाद्यः । अस्मदादेरपि यत्किञ्चिज्जगज्जन्मादिकारण-त्वसम्भवेनातिव्याप्तेः । न द्वितीयः । असम्भवापत्तेः । नहि ब्रह्मणोऽविद्यादि-जगज्जन्मकारणत्वं तेषामनादित्वादित्याशङ्क्य, जगत्पदेन जायते गच्छतीति व्युत्पत्त्या कादाचित्कं विवक्षितमित्याह — अत्रेति । यथाश्रुतबाधकमाशङ्क्या-ह — **अत** इति । नन्वत्र **कर्तृत्वं** कार्यानुकूलकृतिमत्त्वम् । तच्चास्मदादीनामदृ-ष्टद्वारा सम्भवतीत्याशङ्कायामाह — **कर्तृत्वं चेति** । अस्मदादेरुपादानगोचराप-रोक्षज्ञ(?) प्रत्येकघटितमेव लक्षणं स्याद्, नतु मिलितं, गौरवादित्याशङ्क्येष्टापत्ति-माह — **अतएवेति** । ननु कार्यानुकूलतत्तदुपादानगोचरज्ञानादिमत्त्वं कर्तृत्वमि-त्येतदेवानुपपन्नम् । तथाहि — ज्ञानादिर्ज्ञानजन्यो वा, न वा । न चेत् कार्यमात्रे ब्रह्मणः (कर्तव्यत्वं ? कर्तृत्वं) न स्यात् । जन्यश्चेत् स्वेन वा, ज्ञानान्तरेण वा । नाद्यः । स्वस्य स्वं प्रति पौर्वापर्याभावेन कारणत्वासम्भवात् । अन्त्येऽनवस्था-नात् । एवं तादृशचिकीर्षादिमत्त्वमपि निराकरणीयम् । ननु ज्ञानादिव्यतिरिक्त-कार्यमात्रे ज्ञानादेः कारणत्वमस्तु । नच ज्ञानादेर्ज्ञानजन्यत्वाभावे ब्रह्मणस्त-दनुकूलज्ञानवत्त्वेन कर्तृत्वं न स्यादिति वाच्यम् । इष्टापत्तेः । अन्यथा जीवस्य स्वकार्यमात्रे कर्तृत्वं न स्यात् । जीवज्ञानस्य ज्ञानजन्यत्वाभावात् । नच ज्ञानादेः स्वजनकत्वाभा(व ? वात्) कार्यमात्रे जनकत्वमपि न कल्प्यमिति वाच्यम् । परमेश्वरस्य सर्गाद्यका(र ? लत)न्त्वनुकूलतन्तुगोचरज्ञानादिसमये पटोत्पत्ति-

**मन्यतमस्यैव लक्षणे प्रवेशः। एवञ्च लक्षणानि नव सम्पद्यन्ते। ब्रह्मणो जगज्जन्मादिकारणत्वे च 'यतो वा इमानि भूतानि जायन्ते येन**

---

प्रसङ्गात्। यत्तु ज्ञानवत्त्वे सति कार्यमात्रजनकत्वमीश्वरस्य कर्तृत्वमिति। तत् तुच्छम्, जीवस्याप्यदृष्टद्वारा कार्यमात्रजनकत्वाद्, ज्ञानवत्त्वाच्चेत्यतिव्याप्तिरिति चेत्। तथाप्यभिमतासङ्कुचितकर्तृत्वासिद्धेः। तस्माद् ज्ञानादिघटितं लक्षणत्रयमनुपपन्नमिति चेत्। अत्र ब्रूमः— कार्यानुकूलोपादानगोचरज्ञानतत्प्रागभावान्यतरवत्त्वं परमेश्वरस्य कार्यमात्रे कर्तृत्वम्। अथवा कार्यानुकूलोपादानगोचराज्ञानात्यन्ताभाववत्त्वं कर्तृत्वम्। यद्वा कार्यानुकूलोपादानगोचरज्ञानप्रागभाववत्त्वं कर्तृत्वम्। अत्रानुकूलत्वं साक्षात्परम्पराकारणसाधारणं विवक्षितं, तेन प्रागभावस्य कार्यानुकूलत्वाभावादसम्भव इति दूषणं निरस्तं बोध्यम्। अत एव प्रागभावस्योपादानविषयत्वाभावेन दूषणं तदवस्थमिति निरस्तम्। ज्ञानस्य सविषयत्वेन तत्प्रतियोगिकाभावस्याप्यौपचारिकसविषयत्वाभ्युपगमात्। तस्माद् ज्ञानादित्रितयघटितं लक्षणं सुस्थमिति किमनुपपन्नम्। तदेतत् सर्वमभिसन्धायाह — **एवञ्चेति। लक्षणानी**ति। तटस्थलक्षणानीत्यर्थः। तथाहि — जन्माद्युपादानगोचरज्ञानघटितं लक्षणत्रयम्। तथाच जन्माद्युपादानगोचरचिकीर्षावत्त्वघटितम्। तथा तादृशकृतिमत्त्वघटितम्। आहत्य लक्षणानि नवेत्यर्थः। **यत** इति। यतः परमेश्वराद् इमानि पृथिव्यादीनि जायन्ते उत्पद्यन्ते। येन परमेश्वरेण। यत् प्रयन्ति नाशं प्रतिपद्यमानानि सन्ति। अभिसंविशन्ति आभिमुख्येन तदात्मतां प्राप्नुवन्तीति श्रुत्यर्थो बोध्यः। शुद्धस्य ब्रह्मणः कथं जगज्जन्मादिकर्तृत्वमिति चेत्। किं द्रमिडगाथाध्ययनव्यापृतेन पुराणमपि नालोचितम्।

> "निर्गुणस्याप्रमेयस्य विशुद्धज्ञानरूपिणः।
> कथं सर्गादिकर्तृत्वं ब्रह्मणोऽप्युपपद्यते ॥"

इति पृष्टे,

> "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः।
> यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥"

इति विष्णुपुराण एव समाधानस्य दर्शितत्वात्। सर्वसाधारणं लक्षणमुक्त्वा

जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ती'त्यादिश्रुतिर्मानम् । यद्वा

स्वमतमात्रसिद्धं लक्षणमाह — यद्वेति । यद्वा परमाणुर्जगदुपादानमिति कणभुगादयः । प्रधानं जगदुपादानमिति साङ्ख्याः । असदेव जगदुपादानमिति शून्यवादिनो मन्यन्ते । तान् लक्षणान्तरकथनव्याजेन निराकरोति— यद्वेति । इदमत्राकूतं — तत्र न तावत् परमाणुर्जगदुपादानम् । तत्सद्भावे प्रमाणाभावात् । तथाहि — न तावत् प्रत्यक्षम्, अणुत्वव्याकोपादनभ्युपगमाच्च । नाप्यनुमानम् । पृथिवीत्वमणुवृत्ति, मूर्तवृत्तिद्रव्यत्वसाक्षाद्व्याप्यधर्मत्वाद्, मनस्त्ववदित्यस्य दृष्टान्तासंमत्या साध्यासाधकत्वात् । नच व्यतिरेकव्याप्तौ गगनादिरेव दृष्टान्त इति वाच्यम् । गगनत्वमणुवृत्ति, द्रव्यत्वसाक्षाद्व्याप्यजातित्वाद्, व्यतिरेकेण रूपत्ववदित्यादिना गगनत्वादेरपि अणुवृत्तित्वापत्तेः । अप्रयोजकत्वान्न साध्यसाधकतेति चेत्, तुल्यम् । नापि त्र्यणुकं स्वाल्पपरिमाणद्रव्यारब्धं, कार्यद्रव्यत्वाद् घटवदिति त्र्यणुकसमवायिकारणसिद्धौ, तस्यापि महद्द्रव्यारम्भकत्वेन तन्त्वादिवत् कार्यतया तस्याप्युक्तानुमानेन स्वाल्पपरिमाणद्रव्यारब्धत्वे सति तस्याप्यवयवकल्पनायां गौरवान्निरवयवत्वसिद्धौ परमाणुसिद्धिरिति वाच्यम् । अधिकपरिमाणदुकूलद्रव्यारब्धे रज्जुद्रव्ये न्यूनपरिमाणे व्यभिचारेणोक्तानुमानायोगात् । नच तत्र दुकूलद्वयस्यान्त्यावयवितया तत्संयोगमा(त्रा ? त्रं) न द्रव्यान्तरोत्पत्तिरिति वाच्यम् । एवं हि न पटादेरपि द्रव्यान्तरत्वं, किन्तु संयोगमात्रमिति प्रसि(च्य ? द्ध) द्रव्यापलापापत्तेः । अत एव पटादेर्नान्त्यावयवित्वम् । अन्यथा तन्त्वादिरपि अन्त्यावयवीत्यस्यापि वाचाटवचसोऽवकाशापत्तेः । किञ्चाव्याप्यवृत्तिसंयोगस्य निरवयवे परमाण्वादावसम्भवेन कथं ततो द्व्यणुकादिक्रमेण कार्योत्पत्तिः । नच 'न्यग्रोधफलमत आहरे'त्यादिवाक्येन परमाणोरुपादानत्वमिति वाच्यम् । तत्र कार्यापेक्षया कारणस्य सूक्ष्मतया दुर्विज्ञानतेत्यर्थपर्यवसानात् । नापि सत्त्वरजस्तमोगुणात्मकं प्रधानं जगदुपादानम् । तत्रापि मानाभावात् । नच सर्वपदार्थानां सुखदुःखमोहात्मकतया तादृशस्यैव समवायिकारणतया तत्सिद्धिरिति वाच्यम् । घटादीनां सुखदुःखमोहहेतुत्वेऽपि तदात्मकत्वाभावात् । नहि लोके सुखाद्यभावज्ञानं, किन्तु तज्जनकत्वधीमात्रम् (?)। नापि

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥"

**निखिलजगदुपादानत्वं ब्रह्मणो लक्षणम् । उपादानत्वं च जगदध्यासाधिष्ठानत्वम् । जगदाकारेण परिणममानमायाधिष्ठानत्वं वा । एतादृश-**

---

इति वचनं प्रमाणम् । 'मायां तु प्रकृतिं विद्यात्' इत्यादिवाक्यानुसारेणाजाशब्दस्य मायापरत्वात् । किञ्च प्रकृतेर्जगदुपादानत्वे 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि'त्यादिवाक्ये ब्रह्मज्ञानेन सर्वविज्ञानोपन्यासो न स्यात् । नहि मृन्मयघटादिज्ञानं कुलालादिज्ञानेन सम्भवति । नच त्वन्मतेऽपि ब्रह्मज्ञाने सति ब्रह्मव्यतिरिक्तवस्त्वनङ्गीकारेण कुतः सर्वविज्ञानमिति वाच्यम् । सर्वस्वरूपं विज्ञातं भवतीति विवक्षितार्थः । एवञ्चारोपितस्वरूपस्याधिष्ठानमात्रतया ब्रह्मविज्ञानमेव सर्वविज्ञानमित्युक्तं भवति । नाप्यसदुपादानम् । सन् घट इति बुद्धिर्न स्यात् । 'कथमसतः सज्जायेते'ति श्रुत्यैवासदुपादानप्रतिषेधाच्च । तस्माद् ब्रह्मैव जगदुपादानमित्यलमतिविस्तरेण । ननु किमिदमुपादानत्वम् । समवायिकारणत्वं वा, परिणामित्वं वा, अध्यासाधिष्ठानत्वं वा । नाद्यः । समवायस्य दूषितत्वात् । न द्वितीयः । ब्रह्मणो निरवयवत्वात् । नच तथापि मायावशात् परिणामोऽस्त्विति वाच्यम् । तदुपाधेरेव परिणामः, न स्वरूपस्य । न तृतीयः । उपादानमृदादौ भ्रमाधिष्ठानत्वस्य, भ्रमाधिष्ठाने शुक्त्यादौ उपादानत्वस्य चाव्यवहारादित्याशङ्क्याह— **उपादानत्वं** चेति । तथाच तत्रापि शुक्त्यवच्छिन्नचैतन्यमेवाधिष्ठानमित्युक्तम् । मृदादिकं तु नोपादानमिति भावः । नन्वेवं ब्रह्मण उपादानत्वे घटादौ मृत्पिण्डाद्यनुविद्धत्वेन(ना ?)भानं न स्यादिति चेत् । न । सन् घटः सन् पट इत्यनुगतसत्ताया एव ब्रह्मचैतन्यात्मकतया मृदाद्यवच्छिन्नतामात्रेण च मृदादौ घटान्वयभानोपपत्तेः । सुखाद्यधिकरणतावच्छेदकशरीरे सुखसम्बन्धवत्, शब्दाधिकरणतावच्छेदकमृदङ्गादौ शब्दाधारता(वच्छेदकवादि ? वच्चे)ति भावः । नन्वेवमविद्योपादानत्वविरोधः । उभयोपादानत्वे प्रपञ्चस्यासत्त्वानिर्वचनीयत्वे स्यातामित्याशङ्क्य परिणामितया अविद्यायाः, विवर्तमानतया च ब्रह्मण उपादानत्वमित्यभिप्रेत्य पक्षान्तरमाह—**जगदाकारेणे**ति । ननूपादानं ब्रह्म चेतनम्, उताचेतनम् । आद्ये घटादेरपि चेतनत्वापत्तिः । उपादानगतविशेषगुणस्य कार्ये स्वसमानजातीयगुणारम्भकत्वनियमात् । द्वितीये न त्वभिमतब्रह्मण उपादानतासिद्धिः । तथाच ब्रह्मणः कर्तृत्वमेव नतूपादानत्वमपीत्याशङ्क्य, अप्रयो-

मेवोपादानत्वमभिप्रेत्य 'इदं सर्वं यदयमात्मा', 'सच्च त्यच्चाभवद्', 'बहु स्यां प्रजायेये'त्यादिश्रुतिषु ब्रह्मप्रपञ्चयोस्तादात्म्यव्यपदेशः । घटः सन्, घटो भाति, घट इष्टः इत्यादिलौकिकव्यपदेशोऽपि सच्चिदानन्दरूपब्रह्मैक्याध्यासात् । नन्वानन्दात्मकचिदध्यासाद् घटादेरिष्टत्वव्यवहारे, दुःखस्यापि तत्राध्यासात् तस्यापि इष्टत्वादिव्यवहारापत्तिरिति चेत् । न । 'आरोपे सति निमित्तानुसरणं नतु निमित्तमस्तीत्यारोपः' इत्यभ्युपगमेन दुःखादौ सच्चिदंशाध्यासेऽपि आनन्दांशाध्यासाभावात् । जगति नामरूपांशद्वयव्यवहारस्तु अविद्यापरिणामात्मकनामरूपसम्बन्धात् । तदुक्तम् —

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥"

इति ।

अत्र जगतो जन्मक्रमो निरूप्यते । तत्र सर्गाद्यकाले परमेश्वरः

---

जकत्वाच्चैतन्यस्यात्मस्वरूपत्वेन गुणत्वाभावाच्चेत्याशयेन ब्रह्मण उपादानत्वे प्रमाणमाह — **एतादृशमिति** । यदिदं सर्वं प्रपञ्चजातम् अयमात्मेति ब्रह्मणः सर्वात्मकत्वमुपादानत्वं विनानुपपद्यमानमुपादानत्वं कल्पयति । एवं ब्रह्मणः केवलकर्तृत्वाभ्युपगमे 'सच्च त्यच्चाभवदि'ति ब्रह्मणः प्रपञ्चसामानाधिकरण्यानुपपत्तेः । नहि कुलालो घटोऽभवदिति व्यपदेशः सम्भवति । एवं 'तदैक्षत बहु स्यामि'ति बहुभवनसङ्कल्पविरोधस्तव मते स्यात् । अस्मन्मते तु व्याघ्रो भविष्यामि गजो भविष्यामीति मायाविसङ्कल्पवदविरोध इति भावः । व्यपदेशो व्यवहारः । एवं ब्रह्मणो जगदुपादानत्वे वैदिकव्यवहारं प्रमाणमुक्त्वा लौकिकव्यवहारमपि प्रमाणयति — **घटः सन्निति** । **व्यपदेशोऽपि** । परमेश्वरस्य जगदुपादानत्वे सम्भवतीति शेषः । सम्भावनायां हेतुमाह — **सदिति** । प्रपञ्चस्य स्वतःसत्तानङ्गीकारादिति भावः । **तत्रापि** । दुःखेऽपीत्यर्थः । ननु सच्चिदानन्दाध्यासाज्जगति सत्त्वादिव्यवहारोऽस्तु । तथापि नामरूपव्यवहारः कथं स्याद्, ब्रह्मणि तयोरभावादित्यत आह — **जगतीति** ।

अत्रैव जगज्जन्मादिकारणत्वं ब्रह्मणस्तटस्थलक्षणमभिहितम् । तदयुक्तं, सृष्टिप्रलये प्रमाणाभावेन जन्मादेरभावादिति केषाञ्चिन्मतं निराकर्तुमाह — **अत्रेति** । लक्षणे वक्तव्ये सतीत्यर्थः । तथाचेतिहासपुराणादिप्रमाणत्वाभ्युप-

**सृज्यमानप्रपञ्चवैचित्र्यहेतुप्राणिकर्मसहकृतोऽपरिमितानिरूपितशक्ति-विशेषविशिष्टमायासहितः सन् नामरूपात्मकनिखिलप्रपञ्चं प्रथमं बुद्धा-वाकलय्य इदं करिष्यामीति सङ्कल्पयति । 'तदैक्षत बहु स्यां प्रजा-येय', 'सोऽकामयत बहु स्यां प्रजायेये'त्यादिश्रुतेः । ततः आकाशा-**

---

गमात् सृष्ट्यादिकमावश्यकमिति भावः । निरूपणप्रकारमाह— **तत्रे**ति । क्रमे निरूपणीये । यद्वा तत्रेत्यस्य विवरणं **सर्गाद्यकाल** इति । सर्गाद्यकाले परमेश्वरः सङ्कल्पयतीति सम्बन्धः । ननु परमेश्वरस्य जगत्स्रष्टृत्वे वैषम्यनैर्घृण्ये स्यातामित्यत आह— **सृज्यमाने**ति । 'रमणीयचरणा रमणीयां योनिमापद्यन्ते' इत्यादिश्रुत्या

"तिर्यङ्नृपितृदेवानां सम्भवो यत्र कर्मभिः ।"

इति वचनाच्च धर्मादेरपि निमित्तत्वावगमादिति भावः । नन्वेवमपि प्रपञ्च-वैचित्र्यं न स्यात्, कारणवैचित्र्याभावात्, कार्यवैचित्र्यस्य कारणवैचित्र्या-धीनत्वादित्यत आह— **अपरिमिते**ति । **नामरूपे**ति । अतएव लोके घटादिकार्यं कुर्वाणाः कुलालादयः प्रथमं करिष्यमाणं बुद्धौ विचार्य कुर्वन्तीति प्रसिद्धमिति भावः । उक्तसङ्कल्पे प्रमाणमाह — **तदि**ति । तद् ब्रह्म ऐक्षत ईक्षां दर्शनं कृतवत् । कथमैक्षतेत्याशङ्कायामाह—**बहु स्यामि**ति । बहु प्रभूतं स्यां भवेयं प्रजायेय प्रकर्षेण उत्पद्येय । सृष्टिं कुर्वीयेति (या)वत् । श्रुत्यन्तर-माह—**स** इति । सः परमेश्वरः । अकामयत कामनामकुरुत । कामनास्वरूप-माह — **बहु स्यामि**ति । व्याख्यातम् । 'अथ पुरुषो ह वै नारायणोऽका-मयत प्रजाः सृजेये'त्यादिश्रुतिरादिपदग्राह्या । सृष्टिप्रकारमाह— **तत** इति । सङ्कल्पानन्तरमित्यर्थः । **आकाशादीनी**ति । नच

"प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः ।"

इति पुराणेन प्रकृतेर्महान् महतोऽहङ्कारः अहङ्कारात् पञ्च तन्मात्राणीत्यादिना च महदादिसृष्टेः प्राथम्यावगमात् कथमाकाशादीनीत्युक्तमिति वाच्यम् । मह-दहङ्कारसृष्टिपूर्वकाणि आकाशादीनीति तदर्थत्वात् । अतएव प्रलयनिरूपण-समये हिरण्यगर्भाहङ्कारे प्रपञ्चलयं वक्ष्यतीति । अतएवाहङ्कारप्रमुखान्याका-शादीनीति क्वचित् पाठ इति भावः । अत्र पृथिव्यादीनि भूतानि चत्वारीति चार्वाको मन्यते । तदुक्तम्—

दीनि पञ्च भूतान्यपञ्चीकृतानि तन्मात्रपदप्रतिपाद्यान्युत्पद्यन्ते । तत्राकाशस्य शब्दो गुणः । वायोस्तु शब्दस्पर्शौ । तेजसस्तु शब्दस्पर्शरूपाणि । अपां तु शब्दस्पर्शरूपरसाः । पृथिव्यास्तु शब्दस्पर्शरूपरसगन्धाः । नतु शब्दस्याकाशमात्रगुणत्वम् । वाय्वादावपि तदुपलम्भात् । नचासौ भ्रमः, बाधकाभावात् । इमानि च भूतानि त्रिगुणमायाकार्याणि त्रिगुणानि । गुणाः सत्त्वरजस्तमांसि । एतैश्च

---

"अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः ।
चतुर्भ्यः साध्यभूतेभ्यश्चैतन्यमुपजायते ॥"

इति, तं निराकरोति — पञ्चेति । आकाशवायुतेजोजलपृथिव्याख्यानि पञ्च भूतपदवाच्यानि । तदुक्तं भागवते —

"महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः "

इति । अत्र 'एतस्मादात्मन आकाशः सम्भूतः' इत्यादिश्रुतिः क्रमोत्पत्तौ मानमिति द्रष्टव्यम् । ननु

"भूतादिस्तु विकुर्वाणः शब्दतन्मात्रकं ततः ।"

इति वचनात् तन्मात्रभूतस्यैव सृष्टिः श्रूयते, नत्वपञ्चीकृतभूतस्येत्याशङ्क्य संज्ञाभेदो न संज्ञिभेद इत्याह — तन्मात्रेति । प्रसङ्गात् पञ्चभूतानां गुणसङ्ख्यानमाह — तत्रेति । ननु लाघवाच्छब्दस्याकाशमात्रगुणत्वं, नतु पृथिव्यादिगुणत्वमिति वैशेषिकमतं निराकरोति — नत्विति । तथाचाह मनुः —

"आद्याद्यस्य गुणानेतानवाप्नोति परः परः ।
यो यो याव(द्गुण)श्चैषां स स तावद्गुणः स्मृतः ॥"

इति । उक्तं च विष्णुपुराणे —

"शब्दादिभिर्गुणैर्ब्रह्मन् संयुक्तान्युत्तरोत्तरे ।"

इति । तथाच गौरवं प्रामाणिकमिति भावः । प्रमाणान्तरमप्याह — वाय्वादाविति । वायुरुद्घोषयति भेर्यां शब्द इत्याद्यनुभवादिति भावः । ननु सत्त्वरजस्तमसां मायागुणत्वेन वियदादिनिष्ठत्वाभावेन तत्रोपलम्भानुपपत्तिरित्याशङ्क्य कारणगुणप्रक्रमेण वियदादिष्वपि तदुत्पाद्यत इत्याह — इमानीति । ज्ञानेन्द्रियाणां सृष्टिप्रकारमाह — एतैश्चेति । अपञ्चीकृतभूतैर्व्यस्तैर्यथाक्रमं श्रोत्रादीनी-

सत्त्वगुणोपेतैः पञ्चभूतैः व्यस्तैर्यथाक्रमं श्रोत्रत्वक्चक्षूरसनाघ्राणानि पञ्चेन्द्रियाणि जायन्ते। एतैरेव सत्त्वगुणोपेतैः पञ्चभूतैर्मिलितैर्मनोबुद्ध्यहङ्कारचित्तानि च जायन्ते। श्रोत्रादीनां पञ्चानां क्रमेण दिग्वातार्कवरुणाश्विनोऽधिष्ठातृदेवताः। मनआदीनां क्रमेण चन्द्रचतुर्मुखशङ्कराच्युता अधिष्ठातृदेवताः। एतैरेव रजोगुणोपेतैः पञ्चभूतैर्यथाक्रमं वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि जायन्ते। तेषां च क्रमेण वह्नीन्द्रोपेन्द्रमृत्युप्रजापतयोऽधिष्ठातृदेवताः। रजोगुणोपेतैः भूतैर्मिलितैः पञ्च वायवः प्राणापानव्यानोदानसमानाख्या जायन्ते। तत्र प्राग्गमनवान् वायुः प्राणः नासादिस्थानवर्ती। अर्वाग्गमनवानपानः पाय्वादिस्थानवर्ती। विष्वग्गमनवान् व्यानोऽखिलशरीरवर्ती। ऊर्ध्वगमनवान् उत्क्रमणवायुरुदानः कण्ठस्थानवर्ती। एवमशितपीतान्नादिसमीकरणकरः समानः नाभिस्थानवर्ती। एवं तैरेव तमोगुणोपेतैरपञ्चीकृतभूतैः पञ्चीकृतानि भूतानि जायन्ते। 'तासां

---

न्द्रियाणि जायन्त इति सम्बन्धः। नन्विन्द्रियाणां मध्ये केषाञ्चिज्ज्ञानकरणत्वं केषाञ्चित् क्रियाकरणत्वमित्यत्र किं निमित्तमित्याशङ्क्याह — **सत्त्वगुणे**ति।

"तैजसानीन्द्रियाण्येव मनो देवाश्च सात्त्विकाः।"

इति भागवतोक्त्या इन्द्रियादेः सत्त्वगुणजन्यत्वावगमेन तद्विशिष्टत्वं वाच्यम्। तथाच 'सत्त्वात् सुखं च ज्ञानं चे'ति वचनेन सत्त्वस्य ज्ञानजनकत्वे तद्विशिष्टस्येन्द्रियादेरपि ज्ञानजनकत्वं न विरुद्धमिति भावः। (**मन** इति?) मिलितैः अपञ्चीकृतभूतैरित्यर्थः। (**मन इति**)। मनआदीनां प्रकाशात्मकत्वात् सात्त्विकांशकार्यत्वमिति भावः। नन्विन्द्रियाणामचेतनत्वेन स्वतः स्वविषये प्रवृत्त्ययोगमाशङ्क्य तत्तत्प्रेरकदेवतावशात् प्रवृत्तिरुपपद्यत इत्याह— **श्रोत्रादीना**मिति। नच परमेश्वर एव तत्प्रेरकोऽस्त्विति वाच्यम्। तस्य साक्षात् तत्प्रेरकत्वाभावादिति भावः। **पञ्चभूतै**रिति। अपञ्चीकृतैरिति शेषः। कर्मेन्द्रियाणां सृष्टिमाह — **एतै**रिति। दिग्वातादीनामिन्द्रियाधिष्ठातृत्वे किं मानमिति चेन्न।

"दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमृत्युकाः।
चन्द्रो विष्णुश्चतुर्वक्त्रः शंभुश्च करणाधिपः॥"

इति भागवतवचनस्य तत्र मानत्वादिति। प्राणादीनां भेदेन व्यपदेशे प्रवृत्तिनिमित्तं

त्रिवृतं त्रिवृतमेकैकां करवाणी'ति त्रिवृत्करणश्रुतेः पञ्चीकरणोपलक्षणार्थत्वात् । पञ्चीकरणप्रकारश्चेत्थम्—आकाशमादौ द्विधा विभज्य तयोरेकं भागं पुनश्चतुर्धा विभज्य तेषां चतुर्णामंशानां वाय्वादिचतुर्षु भूतेषु संयोजनम् । एवं वायुं द्वेधा विभज्य तयोरेकं भागं चतुर्धा विभज्य तेषां चतुर्णामंशानामाकाशादिषु संयोजनम् । एवं तेजोबादीनामपि । तदेवमेकैकस्य भूतस्यार्धं स्वांशात्मकमर्धान्तरं चतुर्विधभूतमयमिति । पृथिव्यादौ स्वांशाधिक्यात् पृथिव्यादिव्यवहारः । तदुक्तं—'वैशेष्यात् तु तद्वादस्तद्वादः' इति । पूर्वोक्तरूपपञ्चीकृतभूत-

---

तेषां स्थानं दर्शयति—तत्रेति । स्थूलभूतसृष्टिमाह—एवमिति । ननु 'तासां त्रिवृतं त्रिवृतमि'त्यादिश्रुत्या त्रिवृत्करणस्यैव श्रुतत्वात् पञ्चीकरणस्याश्रुतत्वात् कथं तत्कथनमित्याशङ्क्याह—तासामिति । पञ्चीकरणस्य श्रुतावश्रूयमाणत्वेऽपि पुराणादौ श्रवणात् । तथाहि—

> "एवञ्च तेषु भूतेषु प्रत्येकं स्याद् द्विधा ततः ।
> चतुर्धा भिन्नमेकैकमर्धमर्धं तथा स्थितम् ॥
> व्योम्नोऽर्धभागाश्चत्वारो वायुतेजःपयोभुवाम् ।
> अर्धानि यानि वायोस्तु व्योमतेजःपयोभुवाम् ॥"

इत्यादि तत्त्वोषसारोक्तेः(?) पञ्चीकरणस्यावश्यमाश्रयणीयत्वादिति भावः । ननु पञ्चानामपि महाभूतानां पञ्चात्मकत्वे सर्वेषामपि रूपित्वेन वाय्वादेरपि चाक्षुषत्वं स्यादित्याशङ्क्य रूपवत्त्वादेश्चाक्षुषत्वप्रयोजकत्वस्य निराकृतत्वादित्याशयेन पञ्चीकरणप्रकारमुपपादयति—पञ्चीकरणेति । तयोरिति । भागयोरित्यर्थः । उक्तप्रकारं भूतान्तरेष्वप्यतिदिशति—एवं तेजोबादीनामिति । तेजोजलपृथिवीनामित्यर्थः । ननु पञ्चभूतानां पञ्चात्मकत्वस्य तुल्यत्वादाकाशादिव्यपदेशभेदः कथं स्यादित्यत आह—पृथिव्यादाविति । भेदव्यवहारे सूत्रसम्मतिमाह—तदुक्तमिति । त्रिवृत्करणप्रकारश्चेत्थं—तेज आदौ द्विधा विभज्य तयोरेकं भागं पुनर्द्वेधा विभज्य तयोर्द्वयोरंशयोर्जलपृथिव्योर्भूतयोः संयोजनम् । एवं जलपृथिव्योरपि । ननु शरीरस्येहैव भस्मीभावाच्छरीराभावे कथं जीवस्य परलोकगमनमित्याशङ्क्य स्थूलशरीराभावेऽपि लिङ्गशरीरमादाय परलोकयात्रोपपद्यत इत्याशयेन लिङ्गशरीरोत्पत्तिं दर्शयति—पूर्वोक्तैरिति ।

लिङ्गशरीरं परलोकयात्रानिर्वाहकं मोक्षपर्यन्तस्थायि मनोबुद्धिभ्यामुपेतं ज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चकप्राणादिपञ्चकसंयुक्तं जायते। तदुक्तं—

"पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्॥"

इति। तच्च द्विविधं परमपरं च। तत्र परं हिरण्यगर्भलिङ्गशरीरम्। अपरम् अस्मदादिलिङ्गशरीरम्। तत्र हिरण्यगर्भलिङ्गशरीरं महत्तत्त्वम्। अस्मदादिलिङ्गशरीरं चाहङ्कार इत्याख्यायते। एवं तमोगुणयुक्तेभ्यः पञ्चीकृतभूतेभ्यो भूम्यन्तरिक्षस्वर्गमहर्जनतपस्सत्यात्मकस्योर्ध्वलोकसप्तकस्य, अतलपातालवितलसुतलतलातलरसातलमहातलाख्यस्याधोलोकसप्तकस्य ब्रह्माण्डस्य जरायुजाण्डजस्वेदजोद्भिज्जाख्यचतुर्विधस्थूलशरीराणां चोत्पत्तिः। तत्र जरायुजानि जरायुभ्यो जातानि मनुष्यपश्वादिशरीराणि। अण्डजान्यण्डेभ्यो जातानि पक्षिपन्नगादिशरीराणि। स्वेदजानि तु स्वेदाज्जातानि यूकमशकादिशरीराणि। उद्भिज्जानि तु भूमिमुद्भिद्य जातानि वृक्षादीनि। वृक्षादीनामपि पापफलभोगायतनत्वेन शरीरत्वम्। तत्र परमेश्वरस्य पञ्चतन्मात्राद्युत्पत्तौ

---

लिङ्गशरीरे प्रमाणमाह — तदुक्तमिति। लिङ्गशरीरं विभजते — तच्चेति। ननु कर्मणामिह लोके कामिन्यादिभोग एव फलम्। तथाच परलोके मानाभावात् तद्यात्रानिर्वाहार्थं लिङ्गशरीरानुसरणमनर्थकमित्याशङ्क्य लोकान्तरस्य श्रुतिस्मृतिपुराणेतिहाससिद्धत्वेनापह्नवायोगादित्यभिप्रेत्य तदुपपत्तिमाह — एवमिति। तेषां जडत्वात् तमोंशकार्यत्वम्। चतुर्विधशरीरस्य जीवभोगसाधनत्वात् तदुत्पत्तिमाह — जरायुजेति। जरायुजादेर्भेदेन व्यवहारे प्रवृत्तिनिमित्तमाह — तत्रेति। केशादौ विद्यमानजन्तुविशेषो यूकशब्दार्थः। ननु लोके वृक्षादौ शरीरव्यवहाराभावेन कथं तत्त्वाभिधानमित्याशङ्क्य शरीरलक्षणलक्षितत्वात् तत्त्वमुपपद्यत इत्याह — वृक्षादीनामिति। तथाच

"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः।"

'तस्मात् पश्यन्ति पादपाः' इत्यादिवचनात् तेषां शरीरत्वमवगतमिति भावः। ननु 'आत्मन आकाश' इत्यादिना परमात्मन आकाशादिकर्तृत्वं श्रूयते।

"सर्गादौ सृष्टवान् ब्रह्मा तन्ममाचक्ष्व विस्तरात्।"

सप्तदशावयवोपेतलिङ्गशरीरोत्पत्तौ हिरण्यगर्भस्थूलशरीरोत्पत्तौ च साक्षात् कर्तृत्वम् । इतरनिखिलप्रपञ्चोत्पत्तौ च हिरण्यगर्भद्वारा । 'हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति श्रुतेः । हिरण्यगर्भो नाम मूर्तित्रयादन्यः प्रथमो जीवः ।

"स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ॥"

'हिरण्यगर्भः समवर्तताग्रे' इत्यादिश्रुतेः । एवं भूतभौतिकसृष्टिर्निरूपिता । इदानीं प्रलयो निरूप्यते । प्रलयो नाम त्रैलोक्यविनाशः । स चतुर्विधः नित्यः प्राकृतो नैमित्तिक आत्यन्तिकश्चेति । तत्र नित्यः प्रलयः सुषुप्तिः, तस्याः सकलकार्यप्रविलयरूपत्वात् । धर्माधर्मपूर्वसंस्काराणां च तदा कारणात्मनावस्थानं, तेन सुप्तोत्थितस्य न सुखदुःखाद्यनुपपत्तिः । नवा स्मरणानुपपत्तिः । नच सुषुप्तावन्तःकरणस्यापि विनाशे तदधीनप्राणनादिक्रियानुपपत्तिः, वस्तुतः श्वासाद्यभावेऽपि तदुपलब्धेः पुरुषान्तरविभ्रममात्रत्वात् सुप्तशरीरोपलम्भवत् । नचैवं सुप्तस्य

---

इत्यादिना मनुष्यतिर्यग्वृक्षादिकर्तृत्वं हिरण्यगर्भस्य श्रूयते । तथाच कथं परमात्मनो निखिलजगन्मात्रकर्तृत्वमित्याशङ्क्य साक्षात् परम्परया वा तन्मात्रकर्तृत्वं विवक्षितमित्याह — तत्रेति । ब्रह्मणः प्रलयकारणत्वरूपतटस्थलक्षणसिद्ध्यर्थं प्रलयनिरूपणं प्रतिजानीते — इदानीमिति । प्रलयलक्षणमाह — प्रलयो नामेति । प्रलयं विभजते — स चतुर्विध इति ।

"नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको द्विजाः ! ।
नित्यश्च सर्वभूतानां प्रलयोऽयं चतुर्विधः ॥"

इति पुराणवचनाच्चातुर्विध्यमिति भावः । आद्यमुदाहरति — तत्रेति ।

"नित्यः सदैव जातानां यो विनाशो दिवानिशम् ।"

इति वचनादिति भावः । तत्र हेतुमाह — तस्या इति । ननु सुषुप्तौ सर्वप्रपञ्चलयाङ्गीकारे उत्थितस्य सुखदुःखाद्यनुपपत्तिः, धर्माधर्मादेरपि नष्टत्वादित्यत आह — धर्माधर्मेति । सुषुप्तौ प्रपञ्चलयमाक्षिप्य समाधत्ते — नचेति । अत्र प्राणनादिक्रिया न स्यादित्युच्यते, उत तदभावे तदुपलब्धिर्न स्यादिति । आद्य इष्टापत्तिरित्याह — वस्तुत इति । द्वितीयं दूषयति — तदिति । नचैवमिति । उभयोरपि प्राणनादिक्रियाविरहादिति भावः । सुषुप्तौ प्राणस्थिति-

परेतादविशेषः । सुप्तस्य हि लिङ्गशरीरं संस्कारात्मनात्रैव वर्तते, परेतस्य तु लोकान्तर इति वैलक्षण्यात् । यद्वा अन्तःकरणस्य द्वे शक्ती ज्ञानशक्तिः क्रियाशक्तिश्चेति । तत्र ज्ञानशक्तिविशिष्टान्तःकरणस्य सुषुप्तौ विनाशः, नतु क्रियाशक्तिविशिष्टस्येति प्राणाद्यवस्थानमविरुद्धम् । 'यदा सुप्तः स्वप्नं न कञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति अथैनं वाक् सर्वैर्नामभिः सहाप्येति', 'सता सोम्य! तदा सम्पन्नो भवति स्वमपीतो भवति' इत्यादिश्रुतिरुक्तसुप्तौ मानम् । प्राकृतप्रलयस्तु कार्यब्रह्मविनाशनिमित्तकः सकलकार्यविनाशकः । यदातु प्रागेवोत्पन्नब्रह्मसाक्षात्कारस्य कार्यब्रह्मणो ब्रह्माण्डाधिकारलक्षणप्रारब्धकर्मसमाप्तौ विदेहकैवल्यात्मिका परा मुक्तिः, तदा तल्लोकवासिनामप्युत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणा सह विदेहकैवल्यं,

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥"

इति श्रुतेः । एवं तल्लोकवासिभिः सह कार्यब्रह्मणि मुच्यमाने तदधिष्ठितब्रह्माण्डतदन्तर्वर्तिनिखिललोकतदन्तर्गतस्थावरादीनां भौतिकानां भूतानां च प्रकृतौ मायायां लयः, नतु ब्रह्मणि । बाधरूपविनाशस्यैव ब्रह्मनिष्ठत्वात् । अतः प्राकृत इत्युच्यते । कार्यब्रह्मणो दिवसा-

---

मनाश्रित्याविरोधमभिदधौ । सम्प्रति प्राणस्थित्यभ्युपगमेनाह — **यद्वेति** । न चोक्तसुषुप्तौ प्रमाणाभाव इत्याह — **यदेति** । द्वितीयप्रलयलक्षणमाह— **प्राकृतप्रलय इति** । आत्यन्तिकप्रलयेऽतिव्याप्तिरित्यत उक्तं— **कार्येति** । हिरण्यगर्भविनाशनिमित्तक इत्यर्थः । विशेष्यं निर्दिशति— **सकलेति** । तदेवोपपादयति— **यदात्विति** । ननु ब्रह्मसाक्षात्कारे सति सकलकार्यस्यापि नाशात् कथं हिरण्यगर्भस्य ब्रह्माण्डाधिकार इत्यत आह— **प्रारब्धेति** । ननु तल्लोकवासिनां मुक्त्यङ्गीकारे तत्रत्यस्थावरादीनामपि मुक्तिः स्यादित्यत आह — **उत्पन्नेति** । तल्लोकवासिनामपि मुक्तिरित्यत्र प्रमाणमाह— **ब्रह्मणेति** । नन्वस्तु ब्रह्मादीनां मुक्तिः, तथापि सकलकार्यनाशे किमायातमित्यत आह — **एवमिति** । प्राकृतिकत्वमुपपादयति — **प्रकृताविति** । **अत इति** ।

वसाननिमित्तकत्रैलोक्यमात्रप्रलयो नैमित्तिकप्रलयः । ब्रह्मदिवसश्चतुर्युगसहस्रपरिमितकालः ।

"चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते ।"

इत्यादिवचनात् । प्रलयकालोऽपि दिवसकालपरिमितः, रात्रिकालस्य दिवसकालतुल्यत्वात् । प्राकृतिकप्रलये नैमित्तिकप्रलये च पुराणवचनानि प्रमाणानि ।

"द्विपरार्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः ।
तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय हि ॥
एष प्राकृतिको राजन् ! प्रलयो यत्र लीयते ।"

इति वचनं प्राकृतप्रलये मानम् ।

"एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् ।
शेतेऽनन्तासनो नित्यमात्मसात्कृत्य चात्मभूः ॥"

इति वचनं नैमित्तिकप्रलये मानम् । तुरीयप्रलयस्तु ब्रह्मसाक्षात्कारनिमित्तकः सर्वमोक्षः । स चैकजीववादे युगपदेव । नानाजीववादे तु क्रमेण । 'सर्व एकीभवन्ती'त्यादिश्रुतेः । तत्राद्यास्त्रयो विलयाः कर्मोपरमनिमित्तकाः । तुरीयस्तु ज्ञानोदयनिमित्तकः अज्ञानेन सहैवेति विशेषः । एवं चतुर्विधप्रलयो निरूपितः । तस्येदानीं क्रमो निरूप्यते—भूतानां भौतिकानां च न कारणलयक्रमेण लयः, कारणलयसमये कार्याणा-

---

"प्रयाति प्रकृतौ चैव ब्रह्माण्डं प्रकृता लयः ।"

इति वचनादिति भावः । आत्यन्तिकप्रलये प्रमाणमाह— सर्व इति । उक्तप्रलयेष्वपि ब्रह्मज्ञानस्य कारणत्वमाशङ्क्य निषेधति— तत्रेति । ज्ञानोदयेति ।

"ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि ।"

इति वचनादिति भावः । प्रलयनिरूपणमुपसंहरति — एवमिति । तस्येति । प्रलयस्येत्यर्थः । कारणनाशात् कार्यनाश इति न्यायमतमनूद्य दूषयति — भूतानामिति । किमसमवायिकारणलयात् कार्यलयः, उतोपादानलयाद्, अथ निमित्तलयात् । नाद्यः । असमवायिकारणानभ्युपगमात् । द्वितीयेऽपि यत्किञ्चित्कार्यनाशः, उत सर्वकार्यनाशः । नाद्य इत्याह— कारणेति । निराश्रय-

माश्रयमन्तरेणावस्थानानुपपत्तेः। किन्तु सृष्टिक्रमविपरीतक्रमेण। तत्तत्कार्यनाशे तत्तज्जनकादृष्टनाशस्यैव प्रयोजकतयोपादाननाशस्याप्रयोजकत्वात्। अन्यथा न्यायमतेऽपि महाप्रलये पृथिवीपरमाणुगतरूपरसादेरविनाशापत्तेः। तथाच पृथिव्या अप्सु, अपां तेजसि, तेजसो वायौ, वायोराकाशे, आकाशस्य जीवाहङ्कारे, तस्य च हिरण्यगर्भाहङ्कारे, तस्य चाविद्यायामित्येवंरूप एव प्रलयः। तदुक्तं विष्णुपुराणे—

"जगत्प्रतिष्ठा देवर्षे! पृथिव्यप्सु प्रलीयते।
तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते॥"

इति। एवंविधप्रलयकारणत्वं तत्पदार्थस्य ब्रह्मणस्तटस्थलक्षणम्। ननु वेदान्तैः ब्रह्मणि जगत्कारणत्वेन प्रतिपाद्यमाने सति सप्रपञ्चं ब्रह्म स्यात्। अन्यथा सृष्टिवाक्यानामप्रामाण्यापत्तेरिति चेत्। न। नहि सृष्टिवाक्यानां सृष्टौ तात्पर्यं, किन्त्वद्वितीये ब्रह्मण्येव। तत्प्रतिपत्तौ कथं सृष्टेरुपयोगः। इत्थं — यदि सृष्टिमनुपन्यस्य प्रपञ्चस्य निषेधो ब्रह्मणि प्रतिपाद्येत, तदा ब्रह्मणि प्रतिषिद्धस्य रूपस्येव ब्रह्मणोऽन्यत्रा-

---

कार्यायोगादिति भावः। द्वितीये मदिष्टसिद्धिरित्याह — **किन्त्विति**। तृतीयं दूषयति — **अन्यथेति**। नाशक्रमप्रकारं दर्शयति — **तथाचेति**। तत्र प्रमाणमाह—**तदुक्तमिति**। नन्वेवमुक्तक्रमेण प्रपञ्चलयाङ्गीकारे अखण्डाकारवृत्त्या अविद्यानिवृत्तिर्न स्यात्। वृत्त्यन्तःकरणादिनिवृत्त्यनन्तरमेव अविद्यानिवृत्तेरभ्युपगमेन अविद्यानिवृत्त्यव्यवहितपूर्वसमयेऽखण्डाकारवृत्तेरभावादिति चेत्। न। यत्र ब्रह्मसाक्षात्कारात् प्रपञ्चलयः, तत्र नोक्तक्रमनियमः। किन्तु युगपदेव सर्वप्रपञ्चलयः। अन्यत्र तूक्तक्रमनियम इति भावः। प्रलयनिरूपणस्योपयोगमाह— **एवमिति**। ननु 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिवाक्यं सृष्ट्यादिप्रतिपादकं वा न वा। नाद्य इत्याह — **नन्विति**। **सप्रपञ्चमिति**। निष्प्रपञ्चब्रह्मसिद्धेरेवापेक्षितत्वादिति भावः। द्वितीयं दूषयति— **अन्यथेति**। अप्रतिपादकत्व इत्यर्थः। ननु सृष्ट्यादिवाक्यानां सृष्ट्यादौ तात्पर्याभावे तत्प्रतिपादनवैयर्थ्यमिति शङ्कते—**तदिति**। किं सृष्ट्यादिवाक्यानामुपयोगं पृच्छसि,

वस्थानाशङ्कायां न निर्विचिकित्समद्वितीयत्वं प्रतिपादितं स्यात् । ततः सृष्टिवाक्याद् ब्रह्मोपादेयत्वज्ञाने सत्युपादानं विना कार्यस्यान्यत्र सद्भावशङ्कायां निरस्तायां 'नेति नेती'त्यादिना ब्रह्मण्यपि तस्यासत्त्वोपपादने प्रपञ्चस्य तुच्छत्वावगमे निरस्तनिखिलद्वैतविभ्रममखण्डसच्चिदानन्दैकरसं ब्रह्म सिध्यतीति परम्परया सृष्टिवाक्यानामप्यद्वितीये ब्रह्मण्येव तात्पर्यम् । उपासनाप्रकरणपठितसगुणब्रह्मवाक्यानां तु उपासनाविध्यपेक्षितगुणारोपमात्रपरत्वम् । निर्गुणप्रकरणपठितानां सगुणवाक्यानां तु निषेधवाक्यापेक्षितनिषेध्यसमर्पकत्वेन विनियोग इति न किञ्चिदपि वाक्यमद्वितीयब्रह्मप्रतिपादनेन विरुध्यते ।

तदेवं स्वरूपतटस्थलक्षणलक्षितं तत्पदवाच्यमीश्वरचैतन्यं मायाप्रतिबिम्बरूपमिति केचित् । तेषामयमाशयः—जीवपरमेश्वरसाधा-

---

उत सगुणवाक्यानाम् । आद्य आह—**इत्थमिति** । निर्विचिकित्सं निःशङ्कम् । तुच्छत्वं सद्भिन्नत्वम् । नन्वेवमपि वेदान्ते ब्रह्मणि हिरण्मयत्वसत्यकामादिगुणविशिष्टतया प्रतिपाद्यमाने सत्यद्वैतब्रह्मसिद्धिर्न स्यात् । अन्यथोपासनादिवाक्यानामप्रामाण्यप्रसङ्गादित्याशङ्क्य, किमुपासनाप्रकरणपठितानाम् , उत निर्गुणप्रकरणपठितानाम् (?) । नाद्य इत्याह—**उपासनेति** । द्वितीये त्वाह—**निर्गुणेति** । कर्मकाण्डप्रतिपादकवाक्यानां कर्मणि तात्पर्यावगमात् पुनरद्वैतब्रह्मसिद्धिर्न स्यादिति चेत् । न । तेषामारादुपकारकत्वेन चित्तशुद्ध्युपयोगद्वारा अद्वैते तात्पर्यात् । तथा वेदमात्रस्य ब्रह्मणि तात्पर्यमिति न दिङ्मात्रानर्थक्यम् । तदेतदाह — **न किञ्चिदिति** ।

ननूक्तलक्षणलक्षितः परमेश्वरः प्रतिबिम्बभूतो वा, बिम्बभूतो वा, उभयभिन्नो वा । नाद्यः, मुखप्रतिबिम्बादौ दर्पणाद्युपाधिवत् प्रकृते तदभावात् । न द्वितीयः, बिम्बभूतस्य परमेश्वरस्य जीवप्रदेशेऽभावेन सर्वान्तर्यामित्वं न स्यात् । न तृतीयः, अपसिद्धान्तापातादिति शङ्कामुपसंहारव्याजेन निराकरोति — **तदेवमिति** । प्रतिबिम्बस्यावास्तवत्वसूचनाय रूपपदप्रयोगः । ननु मुखप्रतिबिम्बस्य बिम्बपूर्वकत्ववत् प्रकृते बिम्बाभावात् कथं प्रतिबिम्बरूपत्वमत आह — **तेषामिति** । यद्वा घटावच्छिन्नाकाशवन्मायावच्छिन्न एव परमेश्वरः किं न स्यादित्यत आह — **तेषामिति** । तथाच सत्यनव-

**रणं चैतन्यमात्रं बिम्बम् । तस्यैव बिम्बस्याविद्यात्मिकायां मायायां प्रतिबिम्बमीश्वरचैतन्यम् । अन्तःकरणेषु प्रतिबिम्बं जीवचैतन्यम् ।**

**"कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।"**

**इति श्रुतेः । एतन्मते जलाशयगतशरावगतसूर्यप्रतिबिम्बयोरिव (जीव)-परयोर्भेदः । अविद्यात्मकोपाधेर्व्यापकतया तदुपाधिकेश्वरस्यापि व्यापकत्वम् । अन्तःकरणस्य परिच्छिन्नतया तदुपाधिकजीवस्यापि परिच्छिन्नत्वम् । एतन्मते अविद्याकृतदोषा जीव इव परमेश्वरेऽपि स्युः, उपाधेः प्रतिबिम्बपक्षपातित्वादित्यस्वरसाद् बिम्बात्मकमीश्वरचैतन्यमित्यपरे । तेषामयमाशयः — एकमेव । चैतन्यं बिम्बत्वाक्रान्तमी-**

---

च्छिन्नस्यावच्छिन्नदेशे वृत्त्ययोगेन शुद्धब्रह्मणः सर्वान्तर्यामित्वं न स्यादिति भावः । मायाविद्ययोर्भेदं निषेधति — **अविद्यात्मिकायामिति** । '**भूयश्चान्ते** विश्वमायानिवृत्तिः' इति ज्ञाननिवर्त्या माया प्रसिद्धा । अविद्यापि ज्ञाननिवर्त्येति तयोरैक्यमिति भावः । अत्र जीवस्य प्रतिबिम्बत्वे प्रतिबिम्बस्यावास्तवत्वाभ्युपगमेन बन्धमोक्षयोर्वैयधिकरण्यप्रसङ्गाद् न जीवस्य तत्त्वमिति भास्करादयो मन्यन्ते । तान् निराकरोति — **अन्तःकरणेष्विति** । तथाच किं स्वरूपमात्रस्यासत्त्वम् उत विशिष्टस्य । नाद्यः । असिद्धेः । चैतन्यस्वरूपस्य वस्तुत्वाभ्युपगमात् । न द्वितीयः । इष्टापत्तेः । नहि विशिष्टस्य बन्धमोक्षौ, किन्तु स्वरूपस्यैवाङ्गीकारादिति भावः । नन्वविद्याप्रतिबिम्बो जीवः, अन्तःकरणप्रतिबिम्ब ईश्वर इति वैपरीत्यं किं न स्यादित्यत आह — **कार्येति** । नन्वविद्यायाः परिच्छिन्नत्वेन परमेश्वरस्यापि परिच्छिन्नत्वात् तस्य सर्वनियन्तृत्वादिकं न स्यादित्यत आह — **अविद्येति** । जीवे तु वैषम्यमाह — **अन्तःकरणस्येति** । एतन्मते न्यायमत इव सर्वत्र कार्योपलब्धिः परम्परासम्बन्धविशेषविशेषितादृष्टादेवेति भावः । नन्वविद्याप्रतिबिम्ब ईश्वर इति पक्षे अविद्याकृतकर्तृत्वभोक्तृत्वादयः परमेश्वरेऽपि स्युरिति दूषयति — **एतन्मत इति** । ननु जीवपरयोर्बिम्बत्वाविशेषे कस्यचित् कर्तृत्वादिकं कस्यचिन्नेति वैषम्यं कथमित्यत आह — **तेषामिति** । यद्वा चैतन्यस्यैकत्वात् कथं जीवेश्वरभेदव्यवहार इत्याशङ्क्य बिम्बत्वप्रतिबिम्बत्वाभ्यामुभयव्यवहार इत्याह — **तेषामिति** । दर्पणवदुपाधेरभावात् कथं प्रतिबिम्बत्वादिव्यवस्थेत्याशङ्क्य मतभेदेन तदाह — **बिम्बेति** । ननु जीवपरमात्मानौ पारमार्थिकभेदवन्तौ बिम्बत्वप्रतिबिम्बत्वरूप-

श्वरचैतन्यम् । प्रतिबिम्बत्वाक्रान्तं च जीवचैतन्यम् । बिम्बप्रतिबिम्ब-कल्पनोपाधिश्च एकजीववादेऽविद्या । अनेकजीववादे तु अन्तःकरणान्येव । अविद्यान्तःकरणरूपोपाधिप्रयुक्तो जीवपरभेदः । उपाधिकृतदोषाश्च प्रतिबिम्बे जीव एव वर्तन्ते, नतु बिम्बे परमेश्वरे, उपाधेः प्रतिबिम्बपक्षपातित्वात् । एतन्मते च गगनसूर्यस्य जलादौ भासमानप्रतिबिम्बसूर्यस्येव जीवपरयोरभेदः । ननु ग्रीवास्थमुखस्य दर्पणप्रदेश इव बिम्बचैतन्यस्य परमेश्वरस्य जीवप्रदेशेऽभावात् तस्य सर्वान्तर्यामित्वं न स्यादिति चेत् । न । साभ्रनक्षत्रस्य जलादौ प्रतिबिम्बितत्वे बिम्बभूतमहाकाशस्य जलादिप्रदेशे सम्बन्धदर्शनेन परिच्छिन्नबिम्बस्य प्रतिबिम्बदेशासम्बन्धित्वेऽप्यपरिच्छिन्नबिम्बस्य प्रतिबिम्बदेशसम्बन्धाविरोधात् । नच रूपहीनस्य ब्रह्मणः न प्रतिबिम्बसम्भवः रूपवत एव तथात्वदर्शनादिति वाच्यम् । नीरूपस्यापि रूपस्य प्रतिबिम्बदर्शनात् । नच नीरूपस्य द्रव्यस्य प्रतिबिम्बाभावनियमः, आत्मनो द्रव्यत्वाभावस्योक्तत्वात् ।

---

विरुद्धधर्माश्रयत्वादित्याशङ्क्याद्वैतश्रुतिविरोधेनाप्रयोजकतया दूषयति — अविद्येति । यद्वा, नन्वन्तःकरणं नोपाधिः अपारमार्थिकत्वात्, नह्यारोपितस्योपाधित्वं दृष्टमित्यत आह — अविद्येति । यत उपाधिप्रयुक्तो भेदः, अतः अपारमार्थिकोऽन्तःकरणरूपोपाधिः अन्यथाभेदानुपपत्तेः । उपाध्यन्तरे च पारमार्थिकत्वान्नोभयसिद्धमिति भावः । ननु जीवस्य प्रतिबिम्बत्वेऽपि जीवपरयोरेकत्वादुपाधिकृतदोष ईश्वरेऽपि स्यादित्यत आह — उपाधिकृतेति । ननु यथानवच्छिन्नस्यावच्छिन्नदेशसत्त्वं विरुद्धं, तथा बिम्बस्यापि प्रतिबिम्बदेशसत्त्वं विरुद्धमिति शङ्कते — नन्विति । अत्र प्रतिबिम्बसम्बन्धस्यादर्शनाद् जीवप्रदेशे ईश्वरसम्बन्धासत्त्वमुच्यते, उतान्यत्र तयोरसम्बन्धदर्शनात् । नाद्य इत्याह— साभ्रेति । द्वितीयेऽवच्छिन्नत्वमुपाधिरित्याह — परिच्छिन्नेति । जीवप्रतिबिम्बमात्रेऽयं नियम उत द्रव्ये । नाद्य इत्याह—नीरूपस्येति । द्वितीयं निराकरोति — नचेति । वस्तुतस्तु ब्रह्मणोऽपि कल्पितरूपवत्त्वमस्त्येव । नच चाक्षुषत्वं स्यादिति वाच्यम् । घट इति चाक्षुषज्ञानविषयत्वाभ्युपगमात् । तदुक्तं सुरेश्वराचार्यैः —

"एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ।"

"यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्"

इत्यादिवाक्येन ब्रह्मप्रतिबिम्बाभावानुमानस्य बाधितत्वाच्च । तदेवं तत्पदार्थो निरूपितः ।

इदानीं त्वम्पदार्थो निरूप्यते । अथत्वेकजीववादेऽविद्याप्रतिबिम्बो जीवः । अनेकजीववादेऽन्तःकरणप्रतिबिम्बः । स च जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयवान् । तत्र जाग्रद्दशा नामेन्द्रियजन्यज्ञानावस्था । अवस्थान्तरे इन्द्रियाभावान्नातिव्याप्तिः । इन्द्रियजन्यज्ञानं चान्तःकरणवृत्तिः, स्वरूपज्ञानस्यानादित्वात् । सा चान्तःकरणवृत्ति-

---

"सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते ।"

इति । नीरूपगगनप्रतिबिम्बदर्शनाच्चेति । मूर्तस्य मुखादेः प्रतिबिम्बदर्शनेन ब्रह्मणश्चामूर्तत्वान्न प्रतिबिम्बभाव इत्यत आह —एकधेति । स्वत एकरूपत्वेन व्यवस्थितोऽपि उपाधिभेदान्नानैव गृह्यते जलभाजनभेदेन शीतांशुरिवेत्यर्थः । "रूपंरूपं प्रतिरूपो बभूव" इत्यादिश्रुतिरादिपदग्राह्या । परमप्रकृतमुपसंहराति— तदेवमिति ।

एवं तत्पदार्थं निरूप्य क्रमप्राप्तं त्वम्पदार्थं निरूपयितुं प्रतिजानीते — इदानीमिति । त्वम्पदार्थो जीवः । मतभेदेन जीवस्वरूपमाह —अथत्विति । एकेति । यद्यपि प्रत्यक्षपरिच्छेदे जीवस्वरूपमभिहितं, तथापि तत्रावच्छिन्नपक्षमाश्रित्य, अत्रतु प्रतिबिम्बपक्षमाश्रित्योच्यत इति न दोष इति भावः । ननु जीवब्रह्मणोरेकत्वेन जीवस्येव ब्रह्मणोऽपि सुषुप्त्यादिकं स्यादित्याशङ्क्य 'सता सोम्ये'त्यादिना जीवस्यैव सुषुप्त्यादिश्रवणादित्याशयेन जीवस्यावस्थात्रयं निरूपयितुमुपक्रमते —स चेति । (जन्मान्तर ? जन्यान्त)कृत्यमाह —अवस्थेति । सुषुप्त्यादिकाले इन्द्रियाणां विनष्टत्वादिति भावः । ननु ज्ञानस्य चैतन्यरूपतयानादित्वात् कथमिन्द्रियजन्यत्वमित्यत आह — इन्द्रियेति । ननु स्वप्रकाशात्मसम्बन्धादेव विषयादिभानसम्भवे तदाकारान्तःकरणवृत्त्यभ्युपगमः किमर्थ इत्याशङ्क्याह — सा चेति । ननु घटादिरूपविषयावरणाभिभवार्था वृत्तिः स्वीक्रियते, तत्प्रतिबिम्बितचैतन्यावरणाभिभवार्था वा । नाद्यः । घटादीनां जडत्वेन तत्रावरणकल्पनायोगात् । द्वितीयेऽपि परिच्छिन्नत्वपक्षे, अपरिच्छिन्नत्वपक्षे वा । नाद्यः । तत्र सम्बन्धाभावादेव तदभानोपपत्तौ आवरणानुपपत्तेः । न द्वितीयः । चैतन्यावरणकल्पनायां मानाभावादित्याशङ्क्यापरिच्छिन्नत्वपक्षे

रावरणाभिभवार्थेत्येकं मतम् । तथाहि— अविद्योपहितचैतन्यस्य जीवत्वपक्षे घटाद्यधिष्ठानचैतन्यस्य जीवरूपतया जीवस्य सर्वदा घटादिभानप्रसक्तौ घटाद्यवच्छिन्नचैतन्यावारकमज्ञानं मूलाविद्यापरतन्त्रमवस्थापदवाच्यमवश्यमभ्युपगन्तव्यम् । एवं सति घटादेर्न भानप्रसङ्गः । अनावृतचैतन्यसम्बन्धस्यैव भानप्रयोजकत्वात् । तस्य चावरणस्य सदातनत्वे कदाचिदपि घटभानं न स्यादिति तद्भङ्गे वक्तव्ये, तद्भङ्गजनकं न चैतन्यमात्रम्, तद्भासकस्य तदनिवर्तकत्वात् । नापि वृत्त्युप-

---

तदुपपादयति — तथाहीति । अन्यथानुपपत्तिरेव मानमिति भावः । अविद्येति । जीवस्यापि व्यापितया घटादिना नित्यसम्बन्धादिति भावः । विषयेषु चैतन्यमेव नेति शङ्कां वारयति — घटादीति । घटादेश्चैतन्यविवर्तत्वात् तत्रापि तदस्तीति भावः । ईश्वरस्य सर्वदा तद्भानमिष्टमेवेति शङ्कां व्युदस्यति — जीवस्येति । जीवस्यापि तद्भानं कदाचित् स्वीकृतमेवेत्यत आह — सर्वदेति । वृत्त्यभावदशायामित्यर्थः । विषयस्य जडत्वमाह — घटेति । नन्वत्र किमग्रहणमावरणमुत मिथ्याज्ञानम् अथ तत्संस्कारः । नाद्यः । अग्रहणस्याभावतया नानात्वेन चावारकत्वाकल्पनात् । न द्वितीयः, घटादिज्ञानस्थले नियमेन भ्रमासम्भवात् । न तृतीयः, घटादिभ्रान्तिसंस्कारसत्त्वेऽपि घटप्रत्यक्षोदयात् । तस्मादावरणमेव दुर्वचमित्यत आह — अज्ञानमिति । नन्वज्ञानस्यावारकत्वे घटाकारवृत्तेस्तन्निवर्तकत्वं न स्यात् । अज्ञानस्य ब्रह्मसाक्षात्कारैकनिवर्त्यत्वादित्यत आह — मूलेति । यावन्ति ज्ञानानि तावन्त्यज्ञानानीति स्वीकारादिति भावः । यद्यपि मानाभावेन गौरवेण चानेकाज्ञानपक्षोऽयुक्तः, तथापि एकस्यैवाज्ञानस्य प्रतिजीवं ब्रह्मावरणशक्तिभेदवद् जडावरणशक्तिभेदाङ्गीकारेण तादृशशक्तिविशिष्टाज्ञानस्य निवृत्तौ न विरोध इति भावः । अस्त्वेवं ततः किमित्यत आह — एवमिति । ननु प्रकाशकचैतन्यसम्बन्धात् तद्भानमस्त्वित्यत आह — अनावृतेति । नन्वस्तु घटाद्यभानं, तथाप्यावरणाभिभवार्था वृत्तिरित्यत्र किमायातमित्यत आह — तस्येति । तथापि चैतन्यमेव तद्भङ्गजनकमिति वृत्त्यभ्युपगमवैयर्थ्यमित्याशङ्क्य किं चैतन्यमात्रमावरणभञ्जकम्, उत वृत्त्युपहितम् । आद्य आह — तदिति । तद्भासकस्य ज्ञानभासकस्य । द्वितीयं दूषयति — नापीति । कस्य तर्हि तद्भङ्ग-

हितचैतन्यं, परोक्षस्थलेऽपि तन्निवृत्त्यापत्तेरिति परोक्षव्यावृत्तवृत्तिविशेषस्य तदुपहितचैतन्यस्य त्वावरणभङ्गजनकत्वमित्यावरणाभिभवार्था वृत्तिरुच्यते। सम्बन्धार्था वृत्तिरित्यपरं मतम्। तत्राविद्योपाधिकोऽपरिच्छिन्नो जीवः। स च घटादिप्रदेशे विद्यमानोऽपि घटाद्याकारापरोक्षवृत्तिविरहदशायां न घटादिकमवभासयति, घटादिना सह सम्बन्धाभावात्। तत्तदाकारवृत्तिदशायां तु भासयति, तदा सम्बन्धसत्त्वात्। नन्वविद्योपाधिकस्यापरिच्छिन्नस्य जीवस्य स्वत एव समस्तवस्तुसम्बन्धस्य वृत्तिविरहदशायां सम्बन्धाभावाभिधानमसङ्गतम्, असङ्गत्वदृष्ट्या सम्बन्धाभावाभिधाने च वृत्त्यनन्तरमपि सम्बन्धो न स्यादिति चेत्। उच्यते। न(हि) वृत्तिविरहदशायां जीवस्य सम्बन्धसामान्यं निषेधामः, किन्तु घटादिभानप्रयोजकं सम्बन्धविशेषम्। स च सम्बन्धविशेषः विषयस्य जीवचैतन्यस्य च व्यङ्ग्यव्यञ्जकतालक्षणः कादाचित्कस्तत्तदाकारवृत्तिनिबन्धनः। तथाहि— तैजसमन्तःकरणं स्वच्छद्रव्यत्वात् स्वत एव जीवचैतन्याभिव्यञ्जनसमर्थम्।

---

जनकत्वमित्यत आह — इतीति। ननु वृत्तेर्जडत्वाद् न तज्जनकत्वमित्यत आह — तदुपहितेति। एवं जीवस्याविद्योपहितत्वपक्षे तस्यापरिच्छिन्नतयावरणाभिभवार्था वृत्तिरिति व्यवस्थापिता। सम्प्रति तस्मिन्नेव पक्षे सम्बन्धार्था वृत्तिरिति व्यवस्था घटयितुं शक्येत्याह — सम्बन्धार्थेति। उपपादयति — तत्रेति। उक्तमत इत्यर्थः। ननु 'असङ्गो ह्ययं पुरुषः' इति शास्त्रात् सम्बन्धाभावोऽवगम्यत इत्यत आह — असङ्गेति। किं सम्बन्धमात्रं चोदयसि उत तद्विशेषम्। आद्ये विरोध इत्याह — नहीति। द्वितीयं दूषयति — किमिति। विशेषमिति। निषेधाम इत्यनुषज्यते। सम्बन्धविशेषमेव दर्शयति— स चेति। ननूक्तसम्बन्धस्य सदातनत्वेन सदा घटभानं स्यादित्यत आह— कादाचित्क इति। कादाचित्कत्वे निमित्तमाह — तदिति। ननु विषयस्यास्वच्छत्वात् कथं चैतन्याभिव्यञ्जकतेत्याशङ्क्य किं विषयादेः स्वतो व्यञ्जकत्वाभावः, उत स्वच्छद्रव्यसम्बन्धेऽपि। आद्ये इष्टापत्तिरित्याह — तथाहीति। एवकार(:स्व)रूपार्थः। अन्तःकरणं स्वच्छत्वात् पुनश्चैतन्यव्यञ्जनसमर्थम्।

घटादिकं तु न तथा, अस्वच्छद्रव्यत्वात् । स्वाकारवृत्तिसंयोगदशायां तु वृत्त्यभिभूतजाड्यधर्मकतया वृत्त्युत्पादितचैतन्याभिव्यञ्जनयोग्यताश्रयतया च वृत्त्युदयानन्तरं चैतन्यमभिव्यनक्ति । तदुक्तं विवरणे—'अन्तःकरणं हि स्वस्मिन्निव स्वसंसर्गिण्यपि घटादौ चैतन्याभिव्यक्तियोग्यतामापादयति' इति । दृष्टं चास्वच्छस्यापि स्वच्छद्रव्यसम्बन्धदशायां प्रतिबिम्बग्राहित्वं, यथा कुड्यादेर्जलसंयोगदशायां मुखादिप्रतिबिम्बग्राहिता । घटादेरभिव्यञ्जकत्वं च तत्प्रतिबिम्बग्राहित्वम् । चैतन्यस्याभिव्यक्तत्वं च तत्र प्रतिबिम्बितत्वम् । एवंविधाभिव्यञ्जकत्वसिद्ध्यर्थमेव वृत्तेरपरोक्षस्थले बहिर्निर्गमनाङ्गीकारः । परोक्षस्थले तु वह्न्यादेः (स्मृति ? वृत्ति )संयोगाभावेन चैतन्याव्यञ्जकतया नापरोक्षत्वम् । एतन्मते च विषयाणामपरोक्षत्वं चैतन्याभिव्यञ्जकत्वमिति द्रष्टव्यम् । एवं जीवस्यापरिच्छिन्नत्वेऽपि वृत्तेः सम्बन्धार्थत्वं निरूपितम् ।

---

तद्वद् घटादिकं न भवतीत्यर्थः । द्वितीयं दूषयति — **स्वाकारेति** । ननु तत्संयोगेऽपि जडत्वात् कथं व्यञ्जकत्वमित्यत आह — **वृ(त्त्ये ? त्ती)ति** । ननु विषयस्यानभिव्यञ्जकत्वमित्यत आह — **वृ(त्त्ये ? त्ती)ति** । ननु विषयस्यानभिव्यञ्जकस्वभावत्वान्न तद्व्यञ्जकमित्यत आह — **वृत्त्युत्पादितेति** । स्वतोऽव्यञ्जकस्यापीतरसहकारेण व्यञ्जकत्वे प्रतिकर्मव्यवस्थाग्रन्थीयविवरणाचार्यसम्मतिमाह —**तदुक्तमिति** । अस्वच्छस्य स्वच्छद्रव्यसम्बन्धादभिव्यञ्जकत्वमदृष्टचरमिति शङ्कां व्युदस्यति — **दृष्टं चेति** । उदाहरति — **यथेति** । ननु प्रतिबिम्बग्राहित्वमेव लोके दृष्टं नतु व्यञ्जकत्वमपीत्यत आह — **घटादेरिति** । ननु चैतन्यस्य स्वप्रकाशतया स्वत एव व्यक्तत्वाद् घटादिसम्बन्धेन तदभिधानमसङ्गतमित्याशङ्क्याह — **चैतन्यस्येति** । ननु जीवस्य व्यापितया वृत्तिनिर्गमनात् प्रागेव तत्सम्बन्धोऽस्त्विति किं तन्निर्गमनेन । तथाच सम्बन्धार्था वृत्तिरित्येतत् कथमुपपादितमित्यत आह —**एवमिति** । अन्वयव्यतिरेकाभ्यां वृत्तिसंसृष्टघटादेरेव चैतन्यव्यञ्जकत्वमिति भावः । ननु परोक्षवह्न्यादेरपि वृत्तिसम्बन्धाच्चैतन्याभिव्यञ्जकत्वं स्यादित्यत आह — **परोक्षस्थल इति** । ननूक्तप्रकारेण विषयस्य चैतन्यव्यञ्जकत्वे तदेव विषयापरोक्षलक्षणमस्तु लाघवात्, नतु प्रमात्रभिन्नत्वगर्भं, गौरवादित्याशङ्क्य इष्टापत्तिमाह— **एतन्मत इति** । उपसंहरति — **एवमिति** ।

इदानीं परिच्छिन्नत्वपक्षे वृत्तेः सम्बन्धार्थत्वं प्रतिपाद्यते। तथा-हि— अन्तःकरणोपाधिको जीवः। तस्य च घटाद्यनुपादानता, घटादिदेशासम्बन्धात्। किन्तु ब्रह्मैव घटाद्युपादानम्। तस्य मायोपहितस्य सकलघटाद्यन्वयित्वात्। अतएव ब्रह्मणः सर्वज्ञता। तथाच जीवस्य घटाद्यधिष्ठानब्रह्मचैतन्याभेदमन्तरेण घटाद्यवभासासम्भवे प्राप्ते, तदवभासाय घटाद्यधिष्ठानब्रह्मचैतन्याभेदसिद्ध्यर्थं घटाद्याकारा वृत्तिरिष्यते। ननु वृत्त्यापि कथं प्रमातृचैतन्यविषयचैतन्ययोरभेदः सम्पाद्यते, घटान्तःकरणरूपोपाधिभेदेन तदवच्छिन्नचैतन्ययोरभेदासम्भवादिति चेत्। न। वृत्तेर्विषयदेशनिर्गमनाङ्गीकारेण वृत्त्यन्तःकरणविषयाणामेकदेशस्थत्वेन उपधेयभेदाभावस्योक्तत्वात्। एवमपरोक्षस्थले वृत्तेर्मतभेदेन विनियोग उपपादितः। इन्द्रियाजन्यविषयगोचरापरोक्षान्तः-

---

एवं जीवस्यापरिच्छिन्नत्वपक्षे आवरणाभिभवार्था सम्बन्धार्था च वृत्तिरिति मतद्वयमुपपाद्य परिच्छिन्नत्वपक्षे सम्बन्धार्थत्वं तस्या उपपादयितुं प्रतिजानीते— **इदानीमि**ति। जीवस्य घटाद्युपादानतया विषयादौ तत्सम्बन्धसत्त्वाद् वृत्त्यभ्युपगमो व्यर्थ इत्यत आह — **तस्ये**ति। किन्तर्हि घटाद्युपादानमत आह— **किन्त्वि**ति। ननु शुद्धस्य ब्रह्मणः कथं घटाद्यन्वयित्वं तत्राह — **तस्ये**ति। **अतएवे**ति। ब्रह्मणो घटाद्युपादानत्वादेवेत्यर्थः। नन्वस्त्वन्तःकरणोपाधिको जीवः। तथापि वृत्त्यङ्गीकारे किमायातमित्यत आह — **तथाचे**ति। जीवस्य शरीरप्रदेशमात्रवृत्तित्वात् क्रियाविरहेण विषयदेशगमनायोगाच्च बाह्यचैतन्यसम्बन्धाभावेन वृत्तिनिर्गमनद्वारेण तत्सम्बन्धस्यावश्यवाच्यतया सम्बन्धार्था वृत्तिरित्युच्यत इति भावः। **नन्वि**ति। जलभाजनरूपोपाधिभेदात् तत्प्रतिबिम्बभेददर्शनादिति भावः। नन्वेतन्मते विषयचैतन्यावरणवैयर्थ्यं सकलचैतन्यस्य परिच्छिन्नत्वे विषयस्य नित्यवत् प्रकाशादिप्रसक्तेरिति चेत्। न। द्रव्यत्वादिना गृह्यमाणशुक्तिशकलादौ शुक्तित्वाद्यनवभासस्य विषयचैतन्यावरणविशेषमन्तरेणानुपपत्त्या तत्रावरणकल्पनादिति रहस्यम्। उपपादितमर्थमुपसंहरति — **एव-मि**ति। जाग्रदवस्थाप्रसङ्गेन वृत्तिनिर्गमनस्योपयोगमुक्त्वा क्रमप्राप्तावस्थान्तरस्य लक्षणमाह — **इन्द्रिये**ति। लक्षणगतविशेषणानां व्यावर्त्यं कीर्तयति —

करणवृत्त्यवस्था स्वप्नावस्था । जाग्रदवस्थाव्यावृत्त्यर्थमिन्द्रियाजन्येति । अविद्यावृत्तिमत्यां सुषुप्तौ अतिव्याप्तिवारणाय अन्तःकरणेति । सुषुप्तिर्नाम अविद्यागोचराविद्यावृत्त्यवस्था । जाग्रत्स्वप्नयोरविद्याकारवृत्तेरन्तःकरणवृत्तित्वान्न तत्रातिव्याप्तिः । अत्र केचिन्मरणमूर्छयोरवस्थान्तरतामाहुः । अपरेतु सुषुप्तावेव तयोरन्तर्भावमाहुः । तत्र तयोरवस्थात्रयान्तर्भावबहिर्भावयोस्त्वम्पदार्थनिरूपणे उपयोगाभावान्न तत्र प्रयत्यते । तस्य च मायोपाधिमपेक्ष्यैकत्वम् । अन्तःकरणोपाध्यपेक्षया च नानात्वं व्यवह्रियते । एतेन जीवस्याणुत्वं प्रत्युक्तम् ।

"बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः ।"

---

स्वप्नेति । ननु मरणाद्यवस्थान्तरस्यापि जागरूकत्वात् कथं त्रैविध्यमित्याशङ्क्य त्रैविध्यकथनमुपलक्षणमित्याह— अत्रेति । ननूक्तयोरवस्थान्तरत्वे सुषुप्तिलक्षणं तत्रातिव्यापकं स्यादित्यस्वरसादाह — अपरेत्विति । तथाच तत्रातिव्याप्तिर्न दोषायेति भावः । ननूक्तयोः कस्य बलवत्त्वमित्यत आह — तत्रेति । तथा च गौरवमिति हृदयम् । जीवस्यैकत्वानेकत्वाश्रयत्वमुपाधिभेदेनोपपादयति — तस्येति । तत्र 'अणुर्ह्येष आत्मा',

"वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥"

इत्यादिश्रुत्या 'अणुमात्रोऽप्ययं जीव' इत्यादिस्मृत्या च, जीवो न महान् उत्क्रान्तिमत्त्वादित्यनुमानेन च जीवस्याणुत्वमिति सर्वबहिष्कृताश्चतुर्थैरप्यस्पृश्यमाना अधीतद्रविडप्रबन्धकमात्रेण पूजयन्तः शुभ्रवस्त्रधारणमात्रेणात्मानं शुद्धम्मन्यमानाः स्वाभिमानविषयदेवताद्रव्यं प्रत्यक्षाप्रत्यक्षाभ्यामपहरन्तस्तत्रापि नातीव विश्वास इति सूचयन्तः उच्छिष्टभोजिनोऽपि स्वयम्पाकनियमिन इति विकत्थमाना हव्यकव्यवर्जिता रामानुजमतानुसारिणः सञ्चिरन्ते । तन्मतं निराकरोति — एतेनेति । इदमत्राकूतं — मूलोक्तश्रुत्यान्तःकरणपरिमाणाधिकपरिमाणावगमाद् 'अजो महानयमात्मे'त्याद्यागमाच्च, जीवो नाणुः प्रत्यक्षत्वात् घटवदित्यनुमानेन विपक्षे सर्वशरीरव्यापिसुखाद्युपलब्धिर्न स्यादित्यादिबाधसहितेन च जीवस्याणुत्वाभावसिद्धौ, अणुत्वप्रतिपादकश्रुत्यादीनां घटादिवत् प्रत्य-

**इत्यादौ जीवस्य बुद्धिशब्दवाच्यान्तःकरणपरिमाणोपाधिकपरिमाणश्रवणात् । स च जीवः स्वयम्प्रकाशः स्वाप्नावस्थामधिकृत्य 'अत्रायं**

---

क्षोपलब्धियोग्यतारहितत्वेन सौक्ष्म्याभिप्रायकत्वादिति जीवस्याणुत्वं निरस्तमिति । उक्तलक्षणविभुत्वमपि नेति मन्तव्यम् । तथाहि — न तावत् प्रत्यक्षं मानम्, अहमिहैवास्मीति परिच्छिन्नत्वानुभवविरोधात् । नचायं भ्रमः । बाधकाभावात् । नच सर्वत्रादृष्टकार्योपलब्धिर्न स्यादिति वाच्यम् । अदृष्टस्य नैयायिकाभिमतस्वरूपसम्बन्धादेव तदुपपत्तेः । अन्यथा गगनादावदृष्टकार्यशब्दाभावप्रसङ्गात् । तथाच उक्तयुक्त्या अनणुत्वे सिद्धे सर्वगतत्वश्रुतेर्देहव्यापित्वपरत्वं बोध्यम् । नन्वात्मा न स्वयम्प्रकाशः, मानाभावात् । तथाहि — न तावत् प्रत्यक्षं मानम्, असिद्धेः । नहि स्वप्रकाशत्वं साक्षात् करोमीत्यनुभवः सम्भवति । नाप्यनुमानं, लिङ्गाभावात् । नचात्मा स्वयं*[प्रकाशः (आत्मनः) स्वयम्प्रकाशाव्यभिचारादित्यनुमानं मानमिति वाच्यम् । सुखादौ व्यभिचारात् । (नापि श्रु)तिः । ग्रावप्लवनादिवाक्यवदुपचरितार्थत्वात् । किञ्च स्वयम्प्रकाशत्वं न तावद् वृत्त्यव्याप्यत्वम्, असम्भवात् । (नाप्यवेद्यत्वं) वेदान्तवेद्यत्वात् । नापि फलाव्याप्यत्वम्, अतीतादौ अतीन्द्रिये चातिव्याप्तेः, नाप्यवेद्यत्वे सति (अपरोक्षव्यवहारयोग्यत्वम् ।) सुषुप्तिप्रलयादौ व्यवहाराभावेनाव्याप्तेः । नाप्यवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वयोग्यत्वं, मोक्षे च व्यवहारयोग्यतारूपधर्माभावेनाव्याप्तेः । तस्मात् स्वयम्प्रकाश(त्वानिरुक्तेः) स्वप्रकाशत्वे मानाभावाच्चात्मा न स्वयम्प्रकाश इति केषाञ्चिन्मतं निराकरोति —**स चेति** । इदमत्राकूतम् — न तावन्निरुक्त्यभावः, अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वयोग्यत्वात्यन्ताभावानधिकरणत्वेन स्वप्रकाशत्वानिरुक्तेः । अत्रेदमयुक्तम् । मुक्तावेवाव्याप्तेः । नहि मुक्तिकालेऽत्यन्ताभावाधिकरणत्वम् । ना ........ णस्तथाभूतयोग्यत्वात्यन्ताभावाधिकरणत्वाच्च । (अनधिकर)णत्वे ब्रह्मगततद्योग्यतया मिथ्यात्वं न स्यात् । स्वात्यन्ताभावसमानाधिकरणस्यैव मिथ्यात्वात् । किञ्च अवेद्यत्वं फलाव्याप्यत्वम् । ........... चरमसाक्षात्कारप्रतिबिम्बितचैतन्यव्याप्य .............. वृत्तिप्रतिबिम्बितचिदभिव्यक्तचैतन्यानाश्रयत्वम् । घटादावपि वृत्तिविषयत्वव्यतिरेकेण तदभिव्यक्तचैतन्याश्रयत्वाभावेन तत्रातिव्याप्तेरिति मध्वमतानुसारिण

---

* [एवं रेखान्तर्गतः जीर्णगपुस्तकशकलादुद्धृतः कथञ्चिद् ।

**पुरुषः स्वयंज्योतिरि'ति श्रुतेः । अनुभवरूपश्च । 'प्रज्ञान एवे'त्यादि-**

आहुः, तत् तुच्छम् । स्वप्रकाशत्वं किं] स्वरूपलक्षणं नास्तीत्युच्यते तटस्थ-लक्षणं वा । आद्ये संविदविषयत्वं स्वप्रकाशत्वमिति वदामः । अतीतादिप्रमुख-प्रपञ्चस्य संविदवच्छेदकतया तद्विषयत्वात्, संविद्रूपस्यात्मनः स्वाविषयत्वा-न्नातिव्याप्त्यव्याप्ती । अन्त्ये आत्मभिन्नत्वविवक्षया(न्त्ये ? ) अवेद्यत्वेत्यादिपूर्वोक्त-मेवेति ब्रूमः । नच मुक्तिदशायामव्याप्तिः, आद्यस्य स्वरूपपर्यवसायित्वेन तदा-नीमप्यविकल्पकत्वात् तदान्त्यलक्षणासत्त्वस्येष्टत्वात् । आचार्यास्तु अपरोक्ष-व्यवहृतेर्योग्यस्यासिपदस्य नः सम्भवे स्वप्रकाशत्वे लक्षणासम्भवः कुत इत्य-परोक्षत्वादिघटिततया लक्षणमाहुः । यत्तु स्वप्रकाशत्वे प्रमाणाभावादिति । तन्न । आत्मा स्वयम्प्रकाशः चिद्रूपत्वाद् व्यतिरेकेण घटवदित्यनुमानसम्भवात् । तदुक्त-माचार्यचरणैः —

"चिद्रूपत्वादकर्मत्वात् स्वयंज्योतिरिति श्रुतेः ।
आत्मनः स्वप्रकाशत्वं को वा वारयितुं क्षमः ॥"

इति अलमतिप्रपञ्चेन । स्वप्रकाशत्वे श्रुतिमपि प्रमाणयति— **स्वाप्नेति** । तथाच स्वयमित्यनेनात्मव्यवहारानुकूलज्योतिषः प्रकाशस्य ज्ञानान्यत्वव्यावर्तनादिति भावः । अनेन वाक्येन ईश्वरस्यैव स्वप्रकाशत्वमुच्यते इति शङ्कामपाकरोति— **स्वप्नावस्थामिति** । परमेश्वरस्य स्वप्नाभावेन जीवस्यैव तत्त्वमुच्यत इति भावः । ननु घटादिज्ञानवदात्मज्ञानेऽपि विषयातिरिक्तकर्तृकारकप्रसक्तौ तदेव निवार्यते नतु ज्योतिरन्तरम् । अथवा, आलोकादिज्ञानसाधनानामभावे जीवस्य ज्ञानसाधनं किमिति प्रश्ने अस्येत्यनुषङ्गेण अयं परमेश्वरः अस्य जीवस्य स्वयमेव ज्योतिर्ज्ञानहेतुरित्येवम्परतयापि योजयितुं शक्यत्वादिति चेत् । नैतत् सारम् । ज्योतिष एव विशेष्यत्वात् । मुख्ये सम्भवत्यमुख्यकल्पना(या अ)न्याय्यत्वाच्च । लाघवेन चैतन्यमात्रस्य लक्ष्यत्वाच्च आद्यदोषासम्भवात्, स्वयमिति श्रुतिविरोधात् । नहि श्रुतिरीश्वरस्यायोगं व्यवच्छिनत्ति, निखिलप्रपञ्चनिर्मातु-स्तस्य जीवज्ञाने अयोग्यताविरहेण द्वितीयदोषस्याप्ययुक्तत्वात् । तस्मात् श्रुति-युक्तिभ्यां जीवः स्वयम्प्रकाश इति सिद्धम् । यद्यप्यत्र बहु वक्तव्यमस्ति, तथापि विस्तरभयादुपरम्यते । स्वप्रकाशत्वानुमाने हेत्वसिद्धिमाशङ्क्य निरस्यति — **अनुभवरूपश्चेति** । नन्वेवमनुभवामीत्यनुभवाश्रयतया प्रतीतिः कथमित्यत

१ 'णस', २. 'न' ख. पाठः.

**श्रुतेः । अनुभवामीति व्यवहारस्तु वृत्तिप्रतिबिम्बितचैतन्यमादायोपपद्यते ।**

**एवं त्वम्पदार्थो निरूपितः । अधुना तत्त्वम्पदार्थयोरैक्यं महा-**

---

आह — **अनुभवेति** । अनुभवरूप इत्युपलक्षणम् । आनन्दरूप आत्मेत्यपि बोध्यम् । तथाहि— आत्मन आनन्दरूपत्वे सुखमहमस्वाप्समिति सुप्तोत्थितपरामर्शानुपपत्तिसिद्धोऽ(यं) सौषुप्तिकानुभवस्तावत् प्रमाणम् । तत्काले वैषयिकानन्दाभावात् । नच दुःखाभाव एव सुखत्वेन परामृश्यत इति वाच्यम् । सुषुप्तौ विद्यमानस्यापि दुःखाभावस्य प्रतियोग्यादिज्ञानाभावेनाननुभवात् । सुखत्वप्रकारकत्वज्ञानाभावे तत्प्रकारकपरामर्शायोगाच्च । अतएव सुप्तोत्थितस्य सुखपरामर्शो न स्मृतिः, किन्तु अनुमितिरेवेति परास्तम् । तथाप्यनुमितेः सुखत्वप्रकारिकाया असति बाधकेऽपि भ्रमत्वापातात्, तद्याप्यलिङ्गाभावात् तदप्रतिसन्धानेऽपि तत्परामर्शदर्शनाच्च । तस्मात् सुषुप्तावनुभूयमान आनन्द आत्मैव । किञ्च आत्मा आनन्दरूपः परमप्रेमास्पदत्वाद्, आनन्दवद् उभयसिद्धदृष्टान्तवत्त्वं तन्त्रम् । नतु दृष्टान्तस्योभयसिद्धत्वं, गौरवात् । नच हेत्वसिद्धिः । दुःखदशायामप्यात्मनि प्रेमदर्शनेन सुखोपाधिकृतप्रेमासम्भवेन तस्य निरुपाधिकप्रेमास्पदत्वात् । नचात्यन्तदुःखितस्यात्मत्यागेऽपि प्रवृत्तिदर्शनाद् (न) परमप्रेमास्पदतेति वाच्यम् । तदाप्यात्मव्यतिरिक्तदेहत्याग एव प्रवृत्तेः । अपारदुःखकबलितकलेबरं त्यक्त्वा निर्दुःखः स्यामिति तत्रापि प्रेमास्पदत्वानुभवाच्च । आनन्दात्मकब्रह्माभेदोऽपि जीवस्यानन्दत्वे मानम् । अभेदश्च श्रुतिस्मृतियुक्तिसिद्धो नापह्नवार्हः । वक्ष्यति चाभेदमनुपदम् । नचात्मनः आनन्दाभेदे कस्यायमानन्दः पुरुषार्थः स्यादिति वाच्यम् । यदि कस्येति कर्तृप्रश्नः भोक्तृप्रश्नो वा, तदा न कस्यापि । 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदि'ति मोक्षावस्थायां कर्तृकर्मभावप्रतिषेधात् । नच सुखस्योत्पा(दा) दिप्रत्ययविरोधः । तदभिव्यञ्जकवृत्तिविषयत्वात् । तस्माद् यथा वायौ रूपसमवायो नेति ज्ञानं स्वर्गी ध्वस्त इति वा ज्ञानं विशेषणाभावं न्यायमते यथा नीलरूपं नष्टमिति ज्ञानं गुरुमते रूपसमवायं गोचरयति, तद्वद् मयि सुखं नेति ज्ञानं सुखसम्बन्धाभावमेव गोचरयति । दुःखादौ नित्यत्वग्राहकाभावात् तत्र तन्नाशज्ञानं (सुख ?)दुःखध्वंसमेव गोचरयति न सम्बन्धध्वंसमिति सिद्धमात्मन आनन्दरूपत्वमिति ।

वाक्यप्रतिपाद्यमभिधीयते । ननु नाहमीश्वरः इत्यादिप्रत्यक्षेण किञ्चिज्ज्ञत्वसर्वज्ञत्वादिविरुद्धधर्माश्रयत्वादिलिङ्गेन 'द्वासुपर्णे'त्यादिश्रुत्या

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥"

इत्यादिस्मृत्या च जीवपरभेदस्यावगतत्वेन तत्त्वमस्यादिवाक्यम् 'आदित्यो यूपः यजमानः प्रस्तरः' इत्यादिवाक्यवदुपचरितार्थमेवेति चेन्न । भेदप्रत्यक्षस्य सम्भावितकरणदोषस्यासम्भावितदोषवेदजन्यज्ञानेन बाध्यमानत्वात् । अन्यथा चन्द्रगताधिकपरिमाणग्राहिज्योति-

---

वृत्तानुकीर्तनपुरस्सरं वृत्तवर्तिष्यमाणयोः सङ्गतिं दर्शयति—**एवमिति** । जीवपरैक्यं निरूपयितुं पूर्वपक्षमाह—**नन्विति** । नाहं ब्रह्मास्मीति दुःख्यहमित्याद्यनुभव आदिपदग्राह्यः । ननु नाहमीश्वर इत्यादिप्रत्यक्षं किं चाक्षुषमुत मानसम् । नाद्यः, आत्मनश्चक्षुराद्यविषयत्वात् । न द्वितीयः, मनसो जीवब्रह्मभेदग्रहणायोग्यत्वात् । 'यन्मनसा न मनुते' इत्यादिश्रुतेः । 'तं त्वौपनिषदमि'त्यादिश्रुत्या वेदैकगम्यं ब्रह्मेति मनसानुपलम्भात् । किञ्च

"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।"

'नीहारेण प्रावृताः' 'अनृतेन हि प्रत्यूढाः' इत्यादिश्रुत्या जीवब्रह्माभेदस्याज्ञानेनावृतत्वावगमेन यदि जीवः परमेश्वरः स्याद् उपलभ्येतेत्यापादनासम्भवेन योग्यानुपलब्धिरूपसहकारिविरहान्नाभेदस्य प्रत्यक्षत्वम्, मनस इन्द्रियत्वनिराकरणेन त्वदभिमतप्रत्यक्षायोगाच्चेत्यरुचेराह—**किञ्चिदिति** । जीवपरमात्मानौ धर्मिसमसत्ताकभेदवन्तौ किञ्चिज्ज्ञत्वसर्वज्ञत्वविरुद्धधर्माश्रयत्वाद्, घटपटवदित्यनुमानेनेत्यर्थः । ननु 'नान्योऽतोऽस्ति द्रष्टा, नान्योऽतोऽस्ति श्रोता' इत्यादिश्रुत्या द्रष्टृभेदप्रतिषेधात् श्रुतिबाधितमनुमानमित्यस्वरसादाह—**द्वासुपर्णेत्यादिना** । श्रुतिमुक्त्वा स्मृतिमप्याह—**द्वाविति** । तर्हि अभेदबोधकतत्त्वमस्यादिवाक्यस्य का गतिरित्यत आह—**तत्त्वमस्यादीति** । ननु विनिगमकाभावेन भेदप्रत्यक्षेण वाभेदबोधकागमस्य बाधः किं न स्यादित्याशङ्क्यागमस्य बलवत्त्वादित्याह—**असम्भावितेति** । ननु प्रत्यक्षस्यापि बलवत्त्वात् तथात्वमस्त्विति चेत्, तत्र वक्तव्यम् । किं दोषाजन्यत्वेन बलवत्त्वमुत प्रत्यक्षस्य ज्येष्ठत्वेनोपजीव्यत्वाद् बलवत्त्वम् । अथ भेदप्रत्यक्षस्यानुभवसिद्धत्वेन दुरपह्नवत्वादिति विकल्प्याद्यं निराकरोति—**असम्भावितेति** । द्वितीयं दूषयति—**अन्यथेति** । ज्योतिःशास्त्रस्येति ।

**श्शास्त्रस्य चन्द्रप्रादेशिकत्वप्रत्यक्षेण बाधापत्तेः। पाकरक्ते घटे घटो रक्तोऽयं न श्याम इतिवत् 'सविशेषणे ही'ति न्यायेन जीवपरभेदग्राहिप्रत्यक्षस्य विशेषणीभूतधर्मभेदविषयत्वाच्च। अतएव च नानुमानमपि प्रमाणम्। आगमबाधात्, मेरुपाषाणमयत्वानुमानवत्। नाप्यागमान्त-(र)विरोधः। तत्परातत्परवाक्ययोस्तत्परवाक्यस्य बलवत्त्वेन लोकसिद्ध-**

---

"अष्टाशीतिसहस्राणि विस्तीर्णो योजनानि तु।
प्रमाणं तत्र विज्ञेयं कलाः पञ्चदशैव तु॥"

इति शास्त्रस्येत्यर्थः। तथाच भेदप्रत्यक्षस्य भ्रमरूपत्वान्न बाधक(त्व)मिति भावः। तृतीयं दूषयति — **पाके**ति। परोक्तानुमानं दूषयति — **अतए**वेति। **मेरुपाषाणे**ति। मेरुः पाषाणमयः पर्वतत्वात् सम्मतवदित्यनुमानम्।

"तस्यापि मेरुर्मैत्रेय! मध्ये कनकपर्वतः।"

इति तस्य स्वर्णमयत्वबोधकागमेन यथा बाधितत्वं तद्वदित्यर्थः। भेदबोधकागमविरोधं परिहरति—**नापी**ति। 'द्वासुपर्णे'त्यादेश्च लोकसिद्धभेदानुवादकतया जीवब्रह्मभेदप्रतिपादने तात्पर्याभावेन दुर्बलत्वात् तत्त्वमादेश्च षड्विधप्रमाणेन जीवब्रह्माभेदे तात्पर्यावगमेन बलवत्त्वादभेदसिद्धिरित्याह — **तदि**ति। ननु कस्यानुवादकत्वमिति चेन्न। 'ब्रह्मैवेदममृतं पुरस्तादि'ति वाक्ये ब्रह्मणः सर्वात्मत्वे निर्दिष्टे तर्हि भोक्त्रभेदाद् ब्रह्मापि भोक्तृ स्यात्, तच्चायुक्तम्, अतो न सर्वात्मत्वमिति शङ्कायां मन्त्र आम्नायते। द्वौ बिम्बप्रतिबिम्बभूतौ जीवेश्वरावस्मिन् शरीरे वर्तेते। तयोर्मध्येऽन्यो बुद्धिप्रतिबिम्बभूतः तदभेदाध्यासात् तद्धर्माभिमानी अत्ति कर्मफलभुग् वर्तते। अन्यः स एवान्यः सन् बुद्धितादात्म्यरहितः स्वरूपभूतचैतन्यात्मना अनश्नन् अभिचाकशीति भोगरहितः प्रकाशते। औदासीन्यबोधाभ्यां साक्षिमात्रमित्यर्थः। 'अनश्नन्नि'ति भोक्तृत्वस्य निषेधः। तत्र जीवस्वरूपेण भोगनिषेधे अहमनुभवविरोधपरिहाराय स एवान्तःकरणेन कल्पिततादात्म्यो भुङ्क्ते इति, भोक्तृत्वस्य चैतन्यसामानाधिकरण्यविरोध इति भेदानुवादपूर्वकं तस्य तद् दर्शयतीत्यन्यशेषोऽयमनुवाद इति भावः। तदयं निर्गलितोऽर्थः— विरुद्धधर्मसत्त्वेन भेदाङ्गीकारे शैत्यविरुद्धौष्ण्याश्रयतप्तजलस्य शीतभेदापत्तेः। देहात्मग्राहिप्रत्यक्षविरुद्धस्य देहातिरिक्तात्मप्रतिपादकवाक्यस्य च प्रादेशिक(त्व)ग्राहिप्रत्यक्षविरुद्धस्याधिकपरिमाणग्राहिज्योतिश्शास्त्रस्य चाप्रामाण्यापाताच्च। यदि च जले औष्ण्यमारोपितं, तदा प्रकृतेऽपि

भेदानुवादिद्वासुपर्णेत्यादिवाक्यापेक्षया उपक्रमोपसंहाराद्यवगताद्वैत-तात्पर्यविशिष्टस्य तत्त्वमस्यादिवाक्यस्य प्रबलत्वात् । नच जीवपरैक्ये विरुद्धधर्माश्रयत्वानुपपत्तिः । शीतस्यैव जलस्यौपाधिकौष्ण्याश्रयत्ववत् स्वभावतो निर्गुणस्यैवान्तःकरणाद्युपाधिककर्तृत्वाद्याश्रयत्वप्रतिभासो-पपत्तेः । यदि च जलादावौष्ण्यमारोपितं, तदा प्रकृतेऽपि तुल्यम् । नच सिद्धान्ते कर्तृत्वस्य क्वचिदप्यभावाद् आरोप्यप्रमाहितसंस्कारा-भावे कथमारोप इति वाच्यम् । लाघवेनारोप्यविषयसंस्कारत्वेनैव तस्य हेतुत्वात् । नच प्राथमिकारोपे का गतिः (इति वाच्यम्) । कर्तृत्वाद्यध्या-सप्रवाहस्यानादित्वात् । तत्र तत्त्वम्पदवाच्ययोर्विशिष्टयोरैक्यायोगेऽपि लक्ष्यस्वरूपयोरैक्यमुपपादितमेव । अतएव तत्प्रतिपादकतत्त्वमस्यादि-वाक्यानामखण्डार्थत्वं सोऽयमित्यादिवाक्यवत् । नच कार्यपराणामेव प्रामाण्यं, चैत्र! पुत्रस्ते जात इत्यादौ सिद्धेऽपि सङ्गतिग्रहात् । एवं

तुल्यमिति । उपक्रमेति । 'एकमेवाद्वितीयम्' 'ऐतदात्म्यमिदं सर्वमि'ति चोप-क्रमोपसंहारयोरैकरूप्यावगमात्, 'तत्त्वमसी'ति नवकृत्वोऽभ्यासाद्, 'अनेन जीवेनात्मनानुप्रविश्ये'ति चार्थवाददर्शनाद्, 'अथ येऽन्यथातो विदुरि'ति भेदनिषेधाद्, 'अथ सम्पत्स्यते' इति फलश्रवणाद्, अपूर्वत्वाद्, मृदादिदृष्टा-न्तैश्च वेदान्तानामद्वितीयात्मनि तात्पर्यावगमात् । तदुक्तमाचार्यचरणैः —

> "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
> अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥"

इति भावः । जीवब्रह्मणोरैक्याङ्गीकारे बाधकमाशङ्कते — नचेति । जीवब्रह्मणो-रेकत्वे किञ्चिज्ज्ञत्वादिविरुद्धधर्माश्रयत्वानुपपत्तिः, उत ब्रह्मणो निर्धर्मकत्वेन तदभेदाद् जीवस्य कर्तृत्वादिधर्मकत्वा......................................

..............................ह — शीतस्येति । औष्ण्यारोपवैषम्य-माशङ्कते — नचेति । ननु कर्तृत्वादिविशिष्टस्य जीवस्य सर्वज्ञत्वादिविशिष्ट-ब्रह्मैक्यं कथमुपपद्यत इत्यत आह — तत्रेति । ननु कथं वेदान्तानां सिद्धार्थ-बोधकत्वं, सकलपदानां कार्य एव लोके सङ्गतिग्रहणात् । लोकावगतसामर्थ्य-मतिक्रम्य वेदस्य बोधकत्वायोगादित्याशङ्क्य निराकरोति — नचेति । परि-च्छेदार्थमुपसंहरति — एवमिति । 'तत्त्वमसि' 'अहं ब्रह्मास्मी'त्यादिश्रुत्या

**सर्वप्रमाणाविरुद्धं श्रुतिस्मृतीतिहासपुराणप्रतिपाद्यं जीवपरयोरैक्यं वेदान्तशास्त्रस्य विषय इति सिद्धम् ॥**

इति श्रीधर्मराजाध्वरीन्द्रविरचितायां वेदान्तपरिभाषायां
विषयपरिच्छेदः ॥

---

"ममैवांशो जीवलोके जीवभूतः सनातनः ।"

इत्यादिस्मृत्या च

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ! ।"

इति गीतावचनात्

"मह्यं तुभ्यमनन्ताय तुभ्यं मह्यं शिवात्मने ।
नमो देवादिदेवाय हरये परमात्मने ॥"

इति पुराणाच्च 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती'त्यादिश्रुत्या

"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥
आनन्दरूपः सम्पूर्णो न तदन्योऽस्ति कश्चन ।"

इत्यादिना जीवभेदप्रतिषेधाच्च जीवब्रह्मणोरैक्यमभ्युपगन्तव्यम् । भेदस्तु कल्पित इति । ननु 'सत्यं भिदे'त्यादिवचनं भेदस्य सत्यत्वे मानमिति चेत्, अहो कल्पनाकौशलम् । अनुमानादिकल्पनं विना आगममपि कल्पयसि । भाषाप्रबन्धाध्ययनविक्षिप्तचेतसा प्रसिद्धवेदानाम(न)धीतत्वात् तत एव दोषादेवंविधवचनं कल्पितमिति न केनचिदपराद्धम् । तस्माज्जीवपरैक्यं वेदान्तशास्त्रस्य विषय इति सिद्धम् ॥

इति श्रीपेद्दादीक्षितविरचितायां वेदान्तपरिभाषाप्रकाशिकायां
विषयपरिच्छेदः ॥

## प्रयोजनपरिच्छेदः ।

इदानीं प्रयोजनं निरूप्यते । यदवगतं सत् स्ववृत्तितयेष्यते तत् प्रयोजनम् । तच्च द्विविधं मुख्यं गौणं चेति । तत्र सुखदुःखाभावौ मुख्यप्रयोजने । तदन्यतरसाधनं गौणं प्रयोजनम् । सुखं च द्विविधं, सातिशयं निरतिशयं चेति । तत्र सातिशयसुखं विषयानुषङ्गजनितान्तःकरणवृत्तितारतम्यकृतानन्दलेशाविर्भावविशेषः । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'त्यादिश्रुतेः । निरतिशयसुखं च ब्रह्मैव । 'आनन्दो ब्रह्मेति व्यजानादि'ति श्रुतेः । आनन्दा-

---

प्रयोजनपरिच्छेदः ।

वेदान्तशास्त्रे प्रेक्षावतां प्रवृत्तिसिद्धये प्रयोजनं निरूपयितुं प्रतिजानीते—**इदानीमिति** । प्रयोजनलक्षणमाह — **यदिति** । पित्रादिना निक्षिप्तविविधसुवर्णमाणिक्याद्युपहितेषु गृहेषु निवसतां पुत्रादीनां तदज्ञानेन बहुविधदुःखदर्शनाद् न सत्तामात्रेण प्रयोजनत्वमित्यत उक्तम् — **अवगतमिति** । दुःखस्य प्रयोजनत्वं वारयति — **इष्यत इति** । प्रयोजनं विभजते — **तच्चेति** । **विषयेति** । अङ्गनालिङ्गनादिजनितेत्यर्थः । ननूक्तसुखस्य दुःखसम्भिन्नतया न पुरुषार्थत्वमिति चेत् । न । अवर्जनीयतया प्राप्तस्य दुःखस्य परिहारेण सुखमात्रस्यैव भोक्तव्यत्वात् । तद् यथा मत्स्यार्थी सशल्यान् सकण्टकान् मत्स्यानुपादत्ते स यावदादेयं तावदादाय निवर्तते, यथावा धान्यार्थी सपलालानि धान्यान्याहरति स यावदादेयं तावदादाय निवर्तते । तस्माद् दुःखभयान्नानुकूलवेदनीयं सुखं त्यक्तुमुचितम् । नहि मृगाः सन्तीति शालयो नोप्यन्ते । नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । यदि कश्चिद् भीरुर्दृष्टसुखं त्यजेत्, तर्हि स पशुवदसुखो भवेत् । तदुक्तं —

"त्याज्यं सुखं विषयसङ्गमजन्म पुंसां
दुःखोपसृष्टमिति मूर्खविचारणैषा ।
व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भोस्तुषकणोपहितान् हितार्थी ॥"

इति । **आनन्द इति** । ननु 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन'

त्मकब्रह्मावाप्तिश्च मोक्षः । शोकनिवृत्तिश्च । 'ब्रह्म वेद ब्रह्मैव भवति',

---

इति भेदव्यपदेशाद् आनन्दवत्त्वं, नत्वानन्दरूपत्वमिति चेत् । न । ममात्मा राहोः शिर इतिवद् षष्ठ्युपपत्तेः । 'आत्माराम आत्मकामः' इत्यादिश्रुतिरपि मानम् । नच स्वसमवेतानन्दानुभवेनाप्यात्मारामत्वं सम्भवतीति वाच्यम् । स्वव्यतिरिक्ते चानन्दे तत्सम्बन्धे च कल्प्यमाने गौरवात्, निर्गुणत्वादिश्रुतिविरोधाच्च । नच हेयगुणराहित्यमित्यर्थः । गुणत्वावच्छिन्नप्रतियोगिकाभावस्य मुख्यवृत्त्या निर्गुणशब्दप्रतिपाद्यत्वात् । 'यदेष आकाश आनन्दो न स्यात्'. 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादिश्रुतिश्च मानम् । मत्वर्थलक्षणायां श्रुतहान्यश्रुतकल्पनापातात् । 'यो वै भूमा तत् सुखमि'ति श्रुतिरपि मानम् । 'भूमा सम्प्रसादादध्युपदेशादि'त्यत्र भूमपदस्य ब्रह्माभिधायकताया उक्तत्वात् । तस्मात् सिद्धं ब्रह्मण आनन्दरूपत्वम् । आत्यन्तिकदुःखध्वंसो मोक्षः नत्वानन्दरूप इति नैयायिकाः, देहोच्छेदो मोक्ष इति चार्वाकादयः, इत्यादिना मोक्षवादिनां विवाददर्शनात् स्वाभिमतमोक्षस्वरूपमाह — **आनन्देति** । तथाच दुःखप्रागभावस्य देहोच्छेदस्य वा अज्ञायमानतया अपुरुषार्थत्वान्न मोक्षस्वरूपत्वम् । तथाचाभाणकाः —

> "गोतमाभिमतां मुक्तिं गोतमो गन्तुमर्हति ।
> वरं बृन्दावने रम्ये सृगालोऽपि भवाम्यहम् ॥"

इति । गोतमोऽत्यन्तपशुतमः । गौतम इति पाठः । ततश्च **मुक्तावानन्दो**ऽस्तीति भावः । नच सुखं मे भूयादिति कामनाबलात् स्वगतसुखस्यैव पुरुषार्थत्वं, नत्वानन्दावाप्तेरिति वाच्यम् । स्वगतस्याप्यतीतानागतस्य चापुमर्थत्वेन साक्षात्क्रियमाणस्यैव पुरुषार्थत्वेन स्वाभिन्नसुखस्यापि स्वप्रकाशज्ञानात्मकस्य पुरुषार्थत्वोपपत्तेः । पुरुषान्तरसुखस्याप्रत्यक्षत्वादेवातिप्रसङ्गाभावादिति । (**शोकनि**)**वृत्तिश्चेति** । मोक्ष इत्यनुषज्यते । आनन्दावाप्तेर्मोक्षत्वे प्रमाणमाह — **ब्रह्मेति** । यद्यपि 'सम्पूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेदि'ति(य ? व)दुपचरितार्थकत्वं सम्भवति, तथापि दृष्टान्तस्य जन्मान्तरे ब्राह्मणजन्म भविष्यतीत्यर्थपरत्वात्, प्रकृते च बहुश्रुत्यनुसारेण ऐक्यपरत्वावगमात् । ननु 'ब्रह्मणः सायुज्यं सलोकतामाप्नोती'ति श्रुत्या सायुज्यं मोक्षः । सायुज्यं नाम क्षीरनीरवद् **अन्यदेहाविष्ट**-

'तरति शोकमात्मविदि'त्यादिश्रुतेः । ननु लोकान्तरावाप्तिः तज्जन्यवैषयिकानन्दो वा मोक्षः । तस्य कृतकत्वेनानित्यत्वे मुक्तस्य पुनरावृत्त्यापत्तेः । ननु त्वन्मतेऽपि आनन्दावाप्तेः अनर्थनिवृत्तेश्च सादित्वे तुल्यो दोषः । अनादित्वे मोक्षमुद्दिश्य श्रवणादौ प्रवृत्त्यनुपपत्तिरिति चेत् । न

ग्रहदेवतादिवच्च लोकान्तरसम्बन्धमात्रं नत्वैक्यमिति मध्वमतानुसारिणो मन्यन्ते । तदुक्तं —

"हरौ नियतचित्तत्वाद् ग्रहवत् तत्प्रवेशनात् ।
मोक्षं तादात्म्यमित्याहुर्नतु तद्रूपतः क्वचित् ॥"

इति । अत्र लोकान्तरावाप्तेः सुखदुःखाभावान्यतरत्वाभावेनापुरुषार्थत्वात् । तज्जन्यसुखमेव मोक्ष इति केचित् । तान् निराकरोति — नन्विति । लोकान्तरप्राप्त्यादेः कर्मविशेषोपासनाविशेषसाध्यत्वेन 'तद्यथेहे'ति शास्त्रादनित्यत्वावगमेन मुक्तस्य पुनरावृत्तिः स्यादित्यर्थः । ननु

"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥
यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान् नामरूपाद् विमुक्तः परात् परं पुरुषमुपैति दिव्यम् ॥"

इति मुण्डकश्रुत्या परमेश्वरसादृश्यमेव मोक्षः, नत्वैक्यमिति चेत् । न । श्रुतौ परमसाम्यमैक्यमेव । नतु सादृश्यं, 'ब्रह्मैव भवती'ति श्रुत्यन्तरात् ।

"यथा नदीनदा लोके सागरेणैकतामियुः ।
तद्वदात्माक्षरेणासौ निष्कलेनैकतामियात् ॥"

इति कूर्मवचनाच्च । स्कान्दे मुक्तिवैभवखण्डे सालोक्यसामीप्यसारूप्या(न्यु ? ण्यु)दाहृत्य —

"असौ सायुज्यरूपोक्ता सुखदुःखविवर्जिता ।
षड्भावविक्रियाहीना शुभाशुभविवर्जिता ॥
सर्वसम्बन्धनिर्मुक्ता सत्यज्ञानस्वरूपिणी ।
केवलं ब्रह्मरूपोक्ता सर्वदा सुखलक्षणा ॥
सर्वेषां प्राणिनां साक्षादात्मभूता स्वयम्प्रभा ।
प्रतिबन्धविनिर्मुक्ता सर्वदा परमात्मता ॥"

इति सकलजीवाभिन्नानन्दात्मकब्रह्माभेदोक्तेः । सालोक्यादिषु मुक्तिशब्दो गौणः । परिच्छिन्नत्वेन तेषामनित्यत्वात् ।

"एषा वै परमा मुक्तिः प्रोक्ता वेदार्थवेदिभिः ।
अन्याश्च मुक्तयः सर्वा अवराः परिकीर्तिताः ॥

जन्मनाशाभिभूताश्च तारतम्येन संस्थिताः ।
स्पर्धयोपहता नित्यं परतन्त्राश्च सर्वदा ॥

दुःखोत्तरा अपि श्रेष्ठा दुःखमिश्राश्च सर्वदा ।
एताश्च मुक्तयोऽन्येषां केषाञ्चिदधिकारिणाम् ॥"

इति स्कान्दवचनाच्च । भागवते च—

"बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः ।
गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम् ॥"

इति जीवपरैक्यावगमेनैव जीवबन्धमपारमार्थिकमुक्त्वा तन्निवृत्तेरेव मुक्त्यात्मकत्वोक्तेश्च । तस्माद् ब्रह्मस्वरूपानन्दावाप्तिरनर्थनिवृत्तिश्च मोक्ष इति सिद्धम् । ननु मोक्षः किं प्रत्यग्ब्रह्मैक्यं किं वाविद्यानिवृत्तिः । नाद्यः । प्रत्यग्ब्रह्मैक्यस्य ब्रह्ममात्रतया श्रवणाद्यसाध्यत्वात् । न द्वितीयः । अविद्यानिवृत्तिरपि किमात्ममात्ररूपा, किं वा तदन्या । नाद्यः । उक्तदोषतादवस्थ्यात् । न द्वितीयः । अविद्यानिवृत्तेः सत्यत्वेऽद्वैतभङ्गापत्तेः । मिथ्यात्वे तस्या अपि निवृत्त्यवश्यम्भावेन तस्या अपि तथात्वे अप्रामाणिकमित्याभूतनिवृत्तिधाराङ्गीकारप्रसङ्गादिति चेत् । अत्र वदन्ति—सविलासाविद्यानिवृत्तिरेव मोक्षः । सा च ब्रह्मणो (ना?)ऽन्यैव, श्रवणादिसाध्या परमार्थसती च । नचैवमद्वैतहानिः । ब्रह्मणोऽन्यस्यैव भावस्य सतोऽद्वैतविरोधित्वात् । नचैवं सङ्कोचे मानाभावः । मोक्षस्य श्रुतज्ञानसाध्यत्वाद् अन्यथानुपपत्त्यादेरेव तत्र मानत्वात् । नच तस्य सुखदुःखाभावतत्साधनेतरत्वेनापुरुषार्थत्वं, हेतूच्छेदे पुरुषव्यापारादि(ति) न्यायेनाविद्यानिवृत्तेः दुःखहेतूच्छेदरूपत्वेन पुरुषव्यापारसाध्यत्वेन (मा?) पुरुषार्थत्वोपपत्तेरिति । तच्चिन्त्यम् । आत्मान्यस्यैव भावस्य सतोऽद्वैतविरोधित्वेनाविद्यानिवृत्तिवदभावभूतस्य वियदादिप्रपञ्चनिवृत्तेः प्रागभावात्यन्ताभावादेर्जीवेश्वरादिभेदस्य परमार्थसत्त्वापातात् । नच 'ना(न्योऽ)तोऽस्ति द्रष्टा' 'नेह नानास्ति किञ्चने'ति श्रुत्या भेदमात्रप्रतिषेधाद् भेदमात्रमेव न परमार्थसदिति वाच्यम् । तथा सत्यविद्यानिवृत्त्यात्मनो भेदस्य परमार्थ-

सिद्धस्यैव ब्रह्मस्वरूपस्य मोक्षस्यासिद्धत्वभ्रमेण तत्साधने प्रवृ(त्त्यनु? त्त्यु)पपत्तेः । अनर्थनिवृत्तिरप्यधिष्ठानभूतब्रह्मस्वरूपतया सिद्धैव । लोकेऽपि प्राप्तप्राप्तिपरिहृतपरिहारयोः प्रयोजनत्वं दृष्टमेव । यथा हस्तगतविस्मृतसुवर्णः पुरुषः तव हस्ते सुवर्णमित्याप्तोपदेशादप्राप्तमिव

---

सत्यत्वाभावप्रसङ्गात् । नचेष्टापत्तिः । अविद्यानिवृत्तेरात्ममात्रत्वापत्त्या उक्तदोषतादवस्थ्यात् । किञ्च अविद्यानिवृत्तेः कृतकत्वेनानित्यत्वापत्तौ मुक्तस्य पुनरावृत्तिप्रसङ्गात् । अपिच मोक्षस्य ब्रह्मरूपत्वेऽपि ज्ञानसाध्यत्वस्य वक्ष्यमाणतया अद्वैतसङ्कोचे मानाभावात् । अभावद्वैताङ्गीकारे द्वैतिमूर्खाणामवकाशदानप्रसङ्गात् । अवकाशदाने अशेषाद्वैतमार्गो नश्येत् । तथाच

"प्रसरं न लभन्ते हि यावत् क्वचन मर्कटाः ।
नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे ॥"

इति न्यायेन तेषामवकाशो न देयः । तस्मादानन्दावाप्त्यनर्थनिवृत्तिरूपो मोक्षः । तच्च ब्रह्मैवेति नाद्वैतभङ्गः । नचासाध्यत्वापत्तिः । इष्टत्वात् । 'विमुक्तश्च विमुच्यते', 'ब्रह्मैव सन् ब्रह्माप्येति' इत्यादिश्रुतेः ।

"न बन्धोऽस्ति न मोक्षोऽस्ति इत्येषा परमार्थता ।"

इत्यादिवचनाच्च । नचैवं श्रवणादौ प्रवृत्त्यनुपपत्तिः । मुक्तौ सिद्धत्वनिश्चयवतः पुरुषधौरेयस्याप्रवृत्तेरिष्टत्वात् । तन्निश्चयशून्यस्य चण्डालकुलपोषितसार्वभौमावासिवद् विस्मृतस्वात्मनः पुरुषापशदस्यासिद्धत्वभ्रमवतो जीवपरभेदाभेदवचनश्रवणसञ्जातबहुविधसंशयस्य (अनित्यत्वानिश्चयात् सञ्जि सन्ति हास्मिताहेन्द्रादिहैरण्यगर्भान्तवैषयिकानन्दस्य अग्निप्रवेशार्थालङ्कृतवदात्मानं मन्यमानस्य?) 'आचार्यवान् पुरुषो वेदे'त्यादिवाक्यश्रवणसञ्जातगुरुविश्वासस्य केनापि पुण्यविशेषेण प्राप्तगुरुसमीपस्य स्वरूपनिश्चयाय वेदान्तश्रवणाद्यङ्गीकारात् । (अभेदज्ञानस्य?) आत्मानन्दहेतुवेदान्तश्रवणे सत्यपि तत्राप्रवृत्तिर्दुर्वासनावशात् । यथा दुर्गन्धवासनाविक्षिप्तहृदयः सूकरः विविधसौरभविशेषाविर्भावहेतुपुष्पवाटिकायां सञ्चरन्नपि तदनाघ्राणेन व्यवहितमपि हेयपदार्थं दुर्वासनावशादाघ्राय तत्रैव प्रवर्तते । वस्तुतस्तु प्रमाण(तः) पारमार्थिकसाध्यत्वाभावेऽपि घटादिसाधारणसाध्यत्वमिष्टमेवेति न श्रवणादौ प्रवृत्त्यनुपपत्तिः । अत एव ब्रह्मणः सर्वप्रपञ्चाधारत्वं सर्वैरेवाद्वैतवादिभिरभ्युपगम्यते । तस्माद् निरस्तक्लेशस्वप्रकाशानन्दाविर्भाव एव मोक्ष इति सिद्धम् । आद्यमुदाहरति—यथेति । ननु तव हस्ते सुवर्ण-

**प्राप्नोति । यथावा वलयितचरणायां स्रजि सर्पत्वभ्रमवतः नायं सर्प इत्याप्तवाक्यात् परिहृतस्यैव सर्पस्य परिहारः । एवं प्राप्तस्याप्यानन्दस्य प्राप्तिः परिहृतस्याप्यनर्थस्य निवृत्तिर्मोक्षः, प्रयोजनं च । स च ज्ञानैकसाध्यः । 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय'**

---

मित्याप्तोपदेशस्य प्राप्तसुवर्णस्य प्राप्तिर्न फलं, किन्तु प्राप्तिज्ञानद्वारा तज्जन्यसुखस्य वस्तुतः प्रागप्राप्तस्यैव प्राप्तिः फलम् । एवं नायं सर्प इत्याप्तोपदेशस्यापि नित्यनिवृत्तसर्पनिवृत्तिर्न फलम् । सर्पभ्रमनिरासद्वारा तज्जन्यदुःखस्य वस्तुतः प्रागनिवृत्तस्य निवृत्तिरिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति चेन्न । एतावन्तं कालं प्राप्तमेव सुवर्णमिदानीमप्राप्तमिव प्राप्यते, नित्यनिवृत्तमप्यनिवृत्तमिव निवर्तते इति प्राप्तिपरिहारयोरपि फलत्वेनानुभूयमानत्वात्, अनुभवापलापे उपेक्षणीयता स्यात् । तदुक्तम् —

> "आत्मा तु सततं प्राप्तो ह्यप्राप्तवदविद्यया ।
> तन्नाशे प्राप्तवद् भाति स्वकण्ठाभरणं यथा ॥"

इति (भावः?) । ननु

> "कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।"

इत्याद्यागमात् कर्मण एव मोक्षहेतुत्वमिति शङ्कां निराकर्तुमाह — **स चेति** । मोक्ष इत्यर्थः । तथाचोक्तागमस्य लाङ्गलेन वयं जीवाम इतिवत् परम्परया तत्साधनत्वम् । सिद्धिशब्दस्य ज्ञानार्थत्वं कल्पयित्वा ज्ञानं प्रति साधनत्वपरत्वं सर्वैर्व्याख्येयम् । अन्यथा 'न कर्मणा न प्रजया धनेने'त्यादिश्रुतिविरोधः स्यादिति भावः । ननु 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'ति श्रुत्या ज्ञानस्य कर्मशेषतावगमात् कथं मोक्षसाधनत्वमित्याशङ्क्य तस्य प्रकृतोद्गीथवादविषयत्वान्न दोष इत्यभिप्रेत्य मोक्षस्य ज्ञानसाध्यत्वे श्रुतिं प्रमाणयति — **तमेवेति** । तं परमात्मानं विदित्वा ज्ञात्वा मृत्युं तरतीत्यतिमृत्युः तं संसाररहितात्मस्वरूपमिति यावत् एति प्राप्नोति । मोक्षायैवंविधब्रह्मज्ञानादन्यो मार्गो न विद्यत इत्यर्थः । 'तमेवं विद्वानमृत इह भवती'त्यादिश्रुतिः

> "ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते ।"

इत्यादिस्मृतिश्च आदिपदग्राह्या । एवं श्रुतिपर्यालोचनया मोक्षस्य ज्ञानसाध्यता-

**इत्यादिश्रुतेः, अज्ञाननिवृत्तेर्ज्ञानैकसाध्यत्वनियमाच्च । तच्च ज्ञानं ब्रह्मात्मैक्यगोचरम् । 'अभयं वै जनक प्राप्तोऽसि' 'तदात्मानमेवावेदहं ब्रह्मास्मी'त्यादिश्रुतेः ।**

**"तत्त्वमस्यादिवाक्यार्थज्ञानं मोक्षस्य साधनम् ।"**

---

मुपपाद्य मोक्षस्वरूपपर्यालोचनयापि तदाह — **अज्ञाननिवृत्तेरि**ति । **नियमा-दि**ति । यतो ज्ञानमज्ञानस्यैव निवर्तकमिति न्यायात् कर्मसाध्यत्वानुपपत्तेः । नहि रजतभ्रमनिरासार्थं शुक्तितत्त्वज्ञानातिरिक्तकर्मापेक्षणीयमिति भावः । ननु

"जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ।"

इति श्रुत्यनुसारेण किं भेदगोचरज्ञानमेव शोकनिवृत्तिरूपमोक्षहेतुरिति, नेत्या-ह — **तच्चे**ति । तथाचोक्तश्रुतेः 'उदरमन्तरं कुरुते । अथ तस्य भयं भवती'ति श्रुत्या भेदज्ञानस्य निषेधेन जुष्टं प्रीतम् अन्यं पूर्वमन्यत्वेनाभिमतं यदा स्वात्म-रूपेण पश्यति तदा अस्य परमेश्वरस्य महिमानं सर्वज्ञत्वसर्वेश्वरत्वसर्वशक्तित्व-रूपम् इति प्राप्नोतीत्येतदर्थकत्वादिति भावः । नन्वैक्यगोचरज्ञानमपि न तद्धेतुः, तत्साधकमानाभावादित्यत आह — **अभय**मिति । हे जनक ! आत्मानम् आ-नन्दरूपमेव अवेः, अवगमप्रकारमाह — **अह**मिति । तदा तस्मिन् कालेऽभयं भयरहितं प्राप्तोऽसि इति श्रुतिमुक्त्वा स्मृतिमप्याह — **तत्त्वमस्यादी**ति ।

"संसारवर्जितः साक्षात् सर्वदा परमेश्वरः ।
अहं संसारसाक्षित्वाच्छिवः संसारवर्जितः ॥
तस्मादसङ्गमेवाहुर्मामेव श्रुतयः सदा ।
एवं वाक्यानुसारिण्या युक्त्याचार्यप्रसादतः ॥
अहं स सोऽहमेवेति विजानीयाद् विचक्षणः ।"

इति भविष्यत्पुराणवचनात् ।

"अजमनिद्र(म)स्वप्नमद्वैतं बुध्यते तदा ।"

इति माण्डूक्योपनिषद्वचनाच्च ।

"यः सर्वप्राणिचित्तज्ञो यः सर्वेषां हृदि स्थितः ।
यश्च सर्वान्तरैर्ज्ञेयः सोऽहम(स्मी)ति चिन्तयेत् ॥"

इति हारीतवचनाच्च ।

"जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत् प्रकाशते ।
तद् ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥"

इति कैवल्योपनिषद्वचनाच्च ।

"अहमेव परं ब्रह्म नचाहं ब्रह्मणः पृथक् ।
इत्येवं समुपासीत ब्राह्मणो ब्रह्मवित्तमः ॥"

इति ब्रह्मोपनिषद्वचनाच्च ।

"संविन्मात्रः स्थितश्चाहं शिवोऽहं तृप्तिमात्र(क): ।
चिन्मात्रोऽहं सदानन्द इति मे निश्चिता मतिः ॥
चिन्मात्रो जीवरूपेण ब्रह्मरूपेण च स्थितः ।
व्यतिरिक्तं जडं सर्वं स्वप्नवच्च विनश्यति ॥"

इति स्कान्दवचना(च्च) ।

"यदा नदीनदा लोके सागरेणैकतामियुः ।
तद्वदात्माक्षरेणासौ निष्कलेनैकतामियात् ॥"

इति कूर्मपुराणाच्च ।

"यदस्थूलमनण्वाख्यमप्रमेयमवर्णकम् ।
तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पद्यते ध्रुवम् ॥"

इति विश्वामित्रस्मृतेश्च ।

"अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ।
इति स्यान्निश्चितो मुक्तो बन्धवान(थवा ? न्यथा) भवेत् ॥"

इति वररुचिवचनाच्च ।

"अत्रात्मव्यतिरेकेण द्वितीयं यो न पश्यति ।
ब्रह्मभूतः स एवेह (दक्ष)पक्ष उदाहृतः ॥"

इति दक्षस्मृतेश्च ।

"एकेन हेमेन विभूषणानि जातानि भिन्नत्वमुपाधिभेदात् ।
तेनैव सर्वेश्वर एक एव प्रदृश्यते भिन्न इवाखिलात्मा ॥"

इति नारदीयवचनाच्च ।

"छिद्रभेदैर्यथा वायुर्व्यक्तिभेदैर्यथानलः ।
स्थानभेदैर्यथा सूर्यस्तद्वदेव विभिद्यते ॥"

इति मोक्षधर्मवचनाच्च । (आनन्दस्य ?)

इति नारदीयवचनाच्च । तच्च ज्ञानमपरोक्षरूपं, परोक्षत्वेऽपरोक्षभ्रमनिवर्तकत्वानुपपत्तेः । तच्चापरोक्षज्ञानं तत्त्वमस्यादिवाक्यादिति केचित् । मननिदिध्यासनसंस्कृतान्तःकरणादेवेत्यपरे । तत्र पूर्वाचार्याणामयमाशयः — संविदापरोक्ष्यं न करणविशेषोत्पत्तिनिबन्धनं, किन्तु प्रमेयविशेषनिबन्धनमित्युपपादितम् । तथाच ब्रह्मणः प्रमातृजीवाभिन्नतया तद्गोचरं शब्दजन्यमपि ज्ञानमपरोक्षम् । अतएव प्रतर्दनाधिकरणे प्रतर्दनं प्रति 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्यु-

---

"आत्मनश्च परस्यापि यः करोत्यन्तरोदरम् ।
तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्बणम् ॥"

इति भागवते भेददर्शन(स्य) निन्दितत्वाच्च ।

"भेददर्शनमास्थाय मुक्तिं वाञ्छन्ति ये नराः ।
ते महाघोरसंसारे पतन्त्येव न संशयः ॥"

इति स्कान्दवचनाच्च । तस्माच्छ्रुतिस्मृतीतिहासपुराणादिना भेदज्ञाननिषेधेनाभेदज्ञानस्य मोक्षहेतुत्वप्रतिपादनादभेदज्ञानमेव मुक्तिसाधनमिति सिद्धम् । नन्वैक्यज्ञानं परोक्षमुतापरोक्षम् । नाद्यः । दिङ्मोहादावपरोक्षज्ञानस्यैवापरोक्षभ्रमनिवर्तकत्वदर्शनेन तस्यातथात्वात् । न द्वितीयः । ब्रह्मण्यपरोक्षज्ञानजनकोपायाभावादित्यत आह — **तच्च ज्ञानमिति** । उपायाभावादित्यत्र मतभेदेनोपायमाह — **तच्चेति** । **केचिदिति** । विवरणाचार्यप्रभृतय इत्यर्थः । अपरे । आचार्यवाचस्पतयः । ननु तत्त्वमस्यादिवाक्यस्य नापरोक्षज्ञानजनकत्वं, वाक्यस्य परोक्षज्ञानजनक(त्व)स्वाभाव्येन शब्दसामर्थ्यविरोधात् । नहि विलक्षणकरणस्य विलक्षणकार्यजनकत्वं सम्भवति । तथा सति अश्वत्थबीजाद् वटाङ्कुरोत्पत्त्यापत्तेः । तथाच पूर्वपक्षानुपपत्तिरित्यत आह— **तत्रेति** । पक्षयोर्मध्य इत्यर्थः । तथाच परोक्षज्ञानजनकस्यापि शब्दस्य विचारसहकारिबलादपरोक्षज्ञानजनकत्वं न विरुध्यते संस्कारस्येवेन्द्रियसहकारेण प्रत्यभिज्ञानहेतुत्वमिति भावः । **प्रमेयविशेषेति** । विषयगतयोग्यताविशेष इत्यर्थः । नन्विन्द्रियाजन्यं ब्रह्मज्ञानं कथमपरोक्षमित्याशङ्क्य तस्य दूषितत्वादित्याशयेन प्रागुक्तापरोक्षलक्षणं स्मारयति— **तथाचेति** । तत्त्वमस्यादिवाक्यानामपरोक्षज्ञानजनकत्वे प्रथमाध्यायप्रथमपादगतव्याससूत्रं सम्पादयन् तत्सूत्रप्रसक्तिं सम्पादयति — **अतएवेत्यादिना** ।

पास्स्वे'तीन्द्रप्रोक्तवाक्ये प्राणशब्दस्य ब्रह्मपरत्वे निश्चिते सति 'मामुपास्स्वे'त्यस्मच्छब्दानुपपत्तिमाशङ्क्य तदुत्तरत्वेन प्रवृत्ते 'शास्त्रदृष्ट्या तूपदेशो वामदेववदि'त्यत्र सूत्रे शास्त्राद् दृष्टिः शास्त्रदृष्टिरिति तत्त्वमस्यादिवाक्यजन्यमहंब्रह्मेति ज्ञानं दृष्टिशब्देनोक्तमिति । अन्येषां त्वेवमाशयः — करणविशेषनिबन्धनमेव ज्ञानानां प्रत्यक्षत्वम् । न विषयविशेषनिबन्धनम् । एकस्मिन्नेव सूक्ष्मवस्तुनि पटुकरणापटुकरणयोः प्रत्यक्षाप्रत्यक्षव्यवहारदर्शनात् । तथाच संवित्साक्षात्त्वे इन्द्रियजन्यत्वस्यैव प्रयोजकतया न शब्दजन्यज्ञानस्यापरोक्षत्वम् । ब्रह्मसाक्षात्कारेऽपि मनननिदिध्यासनसंस्कृतं मन एव करणम् । 'मनसैवानुद्रष्टव्यमि'त्यादिश्रुतेः । मनोऽगम्यत्वश्रुतिश्चासंस्कृतमनोविषया । नचैवं

---

**ब्रह्मपरत्व** इति । अत्र एतस्मिन्नैक्यार्थप्रतिपादनपरे वाक्ये ब्रह्मलिङ्गसन्निहितेषु (अब्रह्मलिङ्गान्यब्रह्मपरतया ?) कारणस्य कार्याकारेण व्यवस्थितस्वकार्यधर्मेणापि सम्बन्धात्, कार्यस्य परिच्छिन्नस्य कार्यान्तरेष्वपि वर्तमानेन कारणधर्मेण सम्बन्धाभावादिति न्यायेन प्राणशब्दस्य ब्रह्मपरत्वे निर्णीत इति भावः । **शास्त्रदृष्टिरिति** । शास्त्रजनिता दृष्टिरित्यर्थः । द्वितीयपक्षमुपपादयति — **अन्येषामिति** । विनिगमकाभावाद् विषयनिबन्धनमेव ज्ञानं परोक्षमस्त्वित्यत आह — **एकस्मिन्निति** । कथं तर्हि ज्ञानानामपरोक्षत्वमित्यत आह — **तथाचेति** । अखण्डाकारवृत्तेः चक्षुराद्यजन्यतया अपरोक्षत्वानुपपत्तिरित्यत आह — **ब्रह्मेति** । तर्हि सर्वदा ब्रह्मापरोक्षत्वज्ञानानुपपत्तिरित्यत आह — **मननेति** । तथाच सहकारिविरहादिति भावः । मनसः करणत्वे श्रुतिं प्रमाणयति — **मनसैवेति** । 'अप्राप्य मनसा सहे'त्यादिश्रुत्या मनस आत्मसाक्षात्कारहेतुत्वनिषेधेन कथं मनसः करणत्वं, कथं वोक्तश्रुतेस्तत्साधकत्वमित्याशङ्क्य

"विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥"

इत्यादिस्मृत्यनुसारेणोक्तश्रुत्यनुरोधेन मनोऽगम्यत्वश्रुतिरशुद्धचित्तविषयतया योजनीयेत्याह — **मनोऽगम्यत्वश्रुतिश्चेति** । ननु 'नावेदविन्मनुते तं बृहन्तम्', 'औपनिषदः पुरुषः' इत्यादिश्रुत्या

ब्रह्मण औपनिषदत्वानुपपत्तिः । अस्मदुक्तमनसो वेदजन्यज्ञानानन्तर-मेव प्रवृत्ततया वेदोपजीवित्वाद्, वेदानुपजीविमानान्तरगम्यत्वस्यैव वेदगम्यत्वविरोधित्वात् । शास्त्रदृष्टिसूत्रमपि ब्रह्मविषयमानसप्रत्यक्षस्य शास्त्रप्रयोज्यत्वादुपपद्यते । तदुक्तम्—

"अपिसंराधने—सूत्राच्छास्त्रार्थध्यानजा प्रमा ।
शास्त्रदृष्टिर्मता तां तु वेत्ति वाचस्पतिः परः ॥"

इति । तच्च ज्ञानं पापक्षयात् । स च कर्मानुष्ठानादिति परम्परया

---

"सर्वत्र शक्यते कर्तुमागमं हि विनानुमा ।
तस्मान्न सा शक्तिमती विनागमम्नु(दु ? दी)क्षितुम् ॥"

इत्यादिस्मृत्या च ब्रह्मणो वेदैकगम्यत्वावगमाद् मानान्तरवेद्यत्वानुपपत्तिरित्यत आह—नचैवमिति । किमागमोपजीविमानान्तरवेद्यत्वं निषिध्यते, उत तद-नुपजीविमानान्तरवेद्यत्वम् । नाद्य इत्याह—अस्मदुक्तेति । अन्यथा श्रव-(णा ? ण)समानविषयकमन(नो)पदेशवैयर्थ्यापत्तेरिति भावः । द्वितीये इष्टाप-त्तिमाह—वेदेति । सूत्रविरोधं परिहरति—शास्त्रदृष्टिसूत्रमिति । आचार्य-कल्पतरुकारसम्मतिमाह—तदुक्तमिति । भगवतो व्यासस्य सूत्रकारस्य वे-दान्तश्रवणजन्यशास्त्रार्थध्यानजा प्रमा शास्त्रदृष्टिर्मता सम्मता । कुत एतदव-गम्यत इत्याह—अपिसंराधन इति । 'अपि संराधने प्रत्यक्षानुमानाभ्या-मि'ति सूत्रादित्यर्थः । अपिचैनं निरस्तसमस्तोपप्लवमानन्दरूपं संराधनकाले भक्तिध्यानप्रणिधानानुष्ठानकाले योगिनः पश्यन्ति । कुत एतदवगम्यते । प्र-त्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्याम् । तथाच श्रुतिः—

"ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ।"

इति । स्मृतेरपि

"योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।"

इत्यादि । एवञ्च तां शास्त्रदृष्टिं परः उत्कृष्टो वाचस्पतिः सूत्र(भाष्य)व्याख्याता जानातीति भावः । नन्विदानीं मोक्षहेतुर्ब्रह्मज्ञानं कुतो न जायत इत्याशङ्क्य पापक्षयाभावादित्याह—तच्चेति ।

**कर्मणां विनियोगः । अतएव 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेने'त्यादिश्रुतिः,**

---

"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः ।"

इत्यादिवचनादिति भावः । पापक्षयो वा कुत इत्याकाङ्क्षायामाह— **स चेति** । पापक्षय इत्यर्थः । 'धर्मेण पापमपनुदति',

"योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ।"

इति वचनात् पापक्षयसाध्यतावगमादिति भावः ।

"तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ! ।
यथान्नं मधुसंयुक्तं मधु चान्नेन संयुतम् ॥
एवं तपश्च विद्या च संयुक्तं भेषजं महत् ।"

इत्यागमेन ज्ञानकर्मणोः समुच्चितयोरेव मोक्षहेतुत्वावगमेन कथं कर्मणः पापक्षयहेतुत्वं, कथं वा ज्ञानैकसाध्यत्वं मोक्षस्याभिहितमिति चेत् । न । कर्मणां पापक्षयरूपचित्तशुद्धिद्वारा परम्परया मोक्षोपयोगेऽप्युक्तश्रुत्यविरोधात् । अन्यथा

"धर्मात् सुखं च ज्ञानं च ज्ञानान्मोक्षोऽभिगम्यते ।"

(इति क्रमबोधकं वचनं?)

"नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत् ॥
अभ्यासात् सर्वविज्ञानं कैवल्यं लभते नरः ।"

इत्यादिवचनविरोधाच्च । तथाच चित्तशुद्धिद्वारा कर्मणां ज्ञानजनकतया मोक्षे विनियोगः । तदुक्तं विवरणाचार्यैः —'नित्यकर्माणि मलापकर्षेण पुरुषसंस्कारद्वारेणात्मज्ञानयोग्यतामापाद्य तत्त्वज्ञानजनकतया मोक्षे ज्ञानेन समुच्चीयन्त' इति । तदेतदभिसन्धायाह—**परम्परयेति** । ननु स्वतन्त्रस्वर्गादिफलसाधनत्वेन विहितानां कर्मणां कथं चित्तशुद्धिद्वारा ज्ञानसाधनत्वमुपपद्यत इत्याशङ्क्य स्वतन्त्रफलसाधनस्यापि बृहस्पतिसवस्य 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'ति श्रुत्या वाजपेयाङ्गत्वमवगम्यते तद्वत् कर्मणां ज्ञानजनकत्वे विरोधाभावः । अन्यथा विविदिषन्तीत्यादिश्रुतिविरोधापत्तेरित्याह—**अतएवेति** । अथवा विविदिषन्तीत्यादिवाक्यबलाद् यज्ञादीनां विविदिषायामेवोपयोगः प्रतीयते, ननु पाप

'कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते ।'

इत्यादिस्मृतिश्च सङ्गच्छते । एवं श्रवणमनननिदिध्यासनान्यपि ज्ञान-साधनानि । मैत्रेयीब्राह्मणे 'आत्मा वारे द्रष्टव्य' इति दर्शनमनूद्य त-त्साधनत्वेन 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रवणमनन-निदिध्यासनानां विधानात् । श्रवणं नाम वेदान्तानां तात्पर्यावधारणा-नुकूलमानसक्रिया । मननं नाम शब्दावधारितेऽर्थे मानान्तरविरो-धाशङ्कायां तन्निराकरणानुकूलतर्कात्मकज्ञानको मानसो व्यापारः ।

---

क्षयद्वारा ज्ञानादावित्याशङ्क्याप्रतिबद्धापरोक्षब्रह्मज्ञानस्यैष्यमाणतया पुरुषार्थत्वेन तत्र प्रकृत्यर्थयज्ञादीनां विनियोगेऽपीच्छाया अपुरुषार्थत्वेन तत्र विनियोगानुप-पत्तेरित्याह — अतएवेति । तमेतं परमात्मानं ब्राह्मणा विविदिषन्ति अपरो-क्षतया वेदितुमिच्छन्ति । केन करणेनेत्यपेक्षायामाह — वेदानुवचनेनेति । वेदाध्ययनेन । यागेन दानेनेति प्रसिद्धम् । अनाशकेन हितमितमेध्याशनेन तप-सेत्यर्थः । कर्मणां पापनाशकत्वे प्रमाणान्तरमाह—कषाय इति । कर्मभिः पाप-क्षये सति अनन्तरं ज्ञानमुत्पद्यत इत्यर्थः । 'तपसा कल्मषं हन्ती'त्यादिस्मृतिरादि-पदग्राह्या । इयता प्रबन्धेन ज्ञाने बहिरङ्गसाधनमुक्त्वान्तरङ्गसाधनमाह — एव-मिति । ननु श्रवणादीनां ज्ञानहेतुत्वं न सम्भवति, मानाभावादित्याशङ्क्य तत्र श्रुतिं प्रमाणयति—मैत्रेयीति । अत्र मानत्वं च नानधिगतबोधकतया किन्त्वनु-वादकतया । श्रवणस्य श्रूयमाणाव्यवहितयोग्यसाक्षात्कारजनकताया अन्वयव्य-तिरेकसहकृतप्रमाणसिद्धतया ब्रह्मविचारेऽपि तन्मूलानुमानादेव ब्रह्मसाक्षात्कार-हेतुत्वसिद्धेः । अनूद्येति । यद्यपि 'कृत्याश्च' इत्यनेन सूत्रेण त(स्य ? व्य)प्रत्य-यस्य विधौ स्मरणात् कथमनुवादकत्वं तथापि ज्ञानस्यैवेष्यमाणतया फलत्वेन विधेयत्वायोगादर्हार्थेऽपि त(स्य ? व्य)प्रत्ययदर्शनाच्चेति भावः । तत्साधनत्वेन दर्शनसाधनत्वेन । ननु ब्रह्मणोऽश्रावणत्वात् कथं श्रोतव्यमिति विधानमित्यत आह — श्रवणं नामेति । ननु श्रवणस्य ज्ञानरूपत्वे विधेयत्वायोगादित्यत आह —तात्पर्यावधारणानुकूलमानसक्रियेति । तात्पर्यनिश्चयानुकूलेत्यर्थः । विचार इति यावत् । यद्यपि श्रोतव्य इति श्रुधातोः (श्रोत्रादौ ? श्रवणे) प्रसिद्ध त्वेन विचारवाचकत्वासिद्धिः, तथापि लक्षणया तत्कल्पनमिति ध्येयम् । मानान्तरेति । नाहमीश्वर इत्यादिमानान्तरेत्यर्थः । तर्कात्मकेति । जीवस्य ब्रह्माभिन्नत्वे बहुश्रुतीतिहासपुराणविरोधप्रसङ्गरूपतर्कात्मकेत्यर्थः । अथवा ननु

निदिध्यासनं नाम अनादिदुर्वासनया विषयेष्वाकृष्यमाणस्य चित्तस्य विषयेभ्योऽपकृष्यात्मविषयकत्वस्थैर्यानुकूलो मानसो व्यापारः । तत्र निदिध्यासनं ब्रह्मसाक्षात्कारे साक्षात् कारणम् ।

"ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् ।"

"ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु (तं पश्य)ते निष्कलं ध्यायमानः"

इत्यादिश्रुतेः । निदिध्यासने च मननं हेतुः । अकृतमननस्यार्थदा-

---

श्रवणस्य ब्रह्मज्ञानसाधनत्वे तज्ज्ञानमप्रमाणं स्यात्, ज्ञानसामान्यसामग्र्यतिरिक्तहेतुजन्यत्वस्यैवाप्रामाण्यप्रयोजकत्वादित्याशङ्क्याह — **श्रवणं नामेति** । तथाच श्रवणस्य तात्पर्यावधारणे विनियोगात्, तात्पर्यावधारणं च शाब्दज्ञानसामान्यकारणमिति तदपेक्षत्वेऽपि (न ? ना)प्रामाण्यप्रसङ्ग इति भावः । ननु तात्पर्यज्ञानस्य शाब्दज्ञानसामान्यहेतुत्वेऽपि ज्ञानसामान्ये हेतुत्वाभावेन ब्रह्मज्ञानस्य तज्जन्यत्वेन पुनरप्रामाण्यप्रसङ्ग इति चेत् । अत्र ब्रूमः—ज्ञानसामान्यसामग्र्यतिरिक्तप्रमाभ्रमोभयसाधारणतावारणाय समूहातिरिक्तत्वस्य विवक्षिततया तात्पर्यावधारणस्य शाब्दभ्रमसाधारणत्वेन तद्भिन्नत्वाभावाद् नाप्रामाण्यप्रसङ्गः । वस्तुतस्तु किं वेदान्तवाक्यं द्वैतपरमुताद्वैतपरमिति तात्पर्यसंशयरूपप्रमाणदोषनिवृत्तौ तात्पर्यनिर्णयस्य हेतुत्वेन तन्निवृत्तेर्दोषाभावत्वेन ब्रह्मज्ञानस्य एतज्जन्यत्वेऽपि नाप्रामाण्यप्रसङ्ग इति रहस्यम् । नन्वेवमपि अप्रामाण्यप्रसङ्गो दुर्वारः । मननरूपातिरिक्तकारणजन्यत्वादित्याशङ्क्यानुत्पन्नश्रवणमननस्याधीतवेदा(ङ्ग ? न्त)स्य किञ्चिन्मलिनचित्तस्य तत्त्वमस्यादिवाक्याच्छाब्दज्ञानं जायते । ततो वेदान्तवाक्यं द्वैतपरमुताद्वैतपरमिति तात्पर्यसंशयरूपप्रमाणदोषाच्छाब्दज्ञानेऽप्रामाण्यशङ्का जायते । तथा वेदान्तावगतं जीवपरैक्यं सम्भवत्युत नेति विषयासम्भावनानिराकरणार्थतया मननोपयोगान्नाप्रामाण्यप्रसङ्ग इत्याह — **मननं नामेति** । अनादिदेहाद्यात्माभिमानसंस्कारप्रवाह(सङ्ग ?)जितान्तःकरणस्य देहादिबाह्यपदार्थादिष्वेव प्रसक्तस्य तेभ्यो निष्कृष्यात्मैकाग्र्यानुकूलो मानसो व्यापार इत्यर्थः । ननु श्रवणादीनि ब्रह्मज्ञाने किं साक्षात् साधनानि, उत परम्परया । नाद्यः, निदिध्यासनेन व्यवधानात् । न द्वितीयः । निदिध्यासनस्य तदभावादित्याशङ्क्य व्यवस्थामाह — **तत्रेति** । श्रवणादिषु मध्य इत्यर्थः । साक्षात्साधनत्वे श्रुतिं

दर्याभावेन तद्विषयनिदिध्यासनायोगात् । मनने च श्रवणं हेतुः । श्रवणाभावे तात्पर्यानिश्चयेन शाब्दज्ञानायोगेन श्रुतार्थविषयकयुक्तत्वायुक्तत्वनिश्चयानुकूलमननायोगात् । एतानि त्रीण्यपि ज्ञानोत्पत्तौ कारणानीत्येतावन्मात्रं केचिदाचार्या ऊचिरे । अपरे तु श्रवणं प्रधानं, मनननिदिध्यासनयोस्तु श्रवणात् पराचीनयोरपि श्रवणफलब्रह्मदर्शननिर्वर्तकतया आरादुपकारकतयाङ्गत्वमित्याहुः । तदप्यङ्गत्वं न तार्तीयशेषत्वरूपं, तस्य श्रुत्याद्यन्यतमप्रमाणगम्यस्य प्रकृते श्रुत्याद्यभावे-

---

प्रमाणयति — त इति हेतुरिति । साक्षादिति शेषः । हेतुत्वेऽन्वयव्यतिरेकौ दर्शयति — अकृते(ने?)ति ।

"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
ज्ञात्वा तु सततं ध्येय एते दर्शनहेतवः ॥"

इति श्रुत्या त्रयाणामविशेषेणैव तत्र हेतुत्वप्रतिपादनात् कथमुक्तव्यवस्थोपपत्तिरित्याशङ्क्य परम्परयापि हेतुत्वे तन्न विरुध्यत इत्याह — एतानीति । एतावन्मात्रमिति । नतु साक्षादिति शेषः । अथवा उक्तश्रवणादीनां किमन्योन्याङ्गाङ्गिभावेन हेतुत्वमुत समप्राधान्येनेत्याकाङ्क्षायां तत्र वाचस्पतिमतमाह — एतानीति । (ए)तावन्मात्रमिति । न त्वङ्गाङ्गिभावेनेति शेषः । विवरणमतानुसारिणां मतमाह — अपरे त्विति । श्रवणं प्रधानं, मनननिदिध्यासनयोरङ्गत्वमित्यन्वयः । ननु मनननिदिध्यासनयोः प्रोक्षणादिवत् स्वरूपोपकारितया सन्निपत्योपकारित्वमुत प्रयाजादिवत् फलोपकार्यङ्गतया आरादुपकारकत्वम् । नाद्यः । तयोः श्रवणोत्पत्त्युत्तरभावित्वेन तत्स्वरूपोत्पत्तावनुपयोगात् । न द्वितीयः । विनिगमकाभावेन निदिध्यासनस्याङ्गित्वं श्रवणमननयोरङ्गत्वमित्यस्यापि सुवचनत्वात् । श्रवणादीनां ज्ञानजनने विशेषाभावेन दर्शपूर्णमासवत् समप्रसङ्गभावाच्चेत्याशङ्क्य शक्तितात्पर्यवैशिष्ट्यावधारणरूपश्रवणस्य ब्रह्मावगमं प्रत्यव्यवधानेन करणत्वात्, मनननिदिध्यासनयोस्तु चित्तस्य प्रत्यगात्मप्रवणतालक्षणसंस्कारपरिनिष्पन्नब्रह्मैकाग्र्यलक्षणवृत्तिद्वारा हेतुत्वमिति व्यवहितत्वेन विनिगमकाभावोऽसिद्ध इत्याह—श्रवणात् पराचीनयोरिति । निर्वर्तकतयेति । तदुत्पादकतयेत्यर्थः । आरादिति । आराद् दूरे उपकरोत्यारादुपकारकत्वमित्यर्थः । तार्तीयेति । तृतीयाध्यायसिद्धशेषत्वं न भव(ती)त्यर्थः । कुत इत्यत आह — तस्येति । तार्तीयशेषत्वस्येत्यर्थः । श्रुत्यादीति । श्रुति-

ऽसंभवात् । तथाहि 'व्रीहिभिर्यजेत' 'दध्ना जुहोती'त्यादाविव मनननिदिध्यासनयोरङ्गत्वे न काचित् तृतीयाश्रुतिरस्ति । नापि 'बर्हिर्देवसदनं दामी'त्यादिमन्त्राणां बर्हिःखण्डनप्रकाशनसामर्थ्यवत् किञ्चिल्लिङ्गमस्ति । नापि प्रदेशान्तरपठितस्य प्रवर्ग्यस्याग्निष्टोमे 'प्रवृणक्ती'ति वाक्यवत् श्रवणानुवादेन मनननिदिध्यासनविनियोजकं किञ्चिद् वाक्यमस्ति । नापि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति वाक्यावगतफलसाधनताकदर्शपूर्णमासप्रकरणे प्रयाजादीनामिव फलसाधनत्वेनावगतस्य श्रवणस्य प्रकरणे मनननिदिध्यासनयोराम्नानम् । ननु द्रष्टव्य इति दर्शनानुवादेन श्रवणे विहिते सति फलवत्तया श्रवणं प्रधानं, तत्सन्निधावाम्नातयोर्मनननिदिध्यासनयोः प्रयाजन्यायेन प्रकरणादेवाङ्गतेति चेत् । न। 'ते ध्यानयोगानुगता अपश्यन्नि'त्यादिश्रुत्यन्तरे ध्यानस्य दर्शनसाधनत्वेनावगतस्याङ्गाकाङ्क्षायां प्रयाजन्यायेन श्रवणमनननयोरेवाङ्गतापत्तेः । क्रमसमाख्ये च दूरनिरस्ते । किञ्च प्रया-

---

लिङ्गवाक्यप्रकरणस्थानसमाख्यान्यतमप्रमाणगम्यस्येत्यर्थः । उक्तश्रुत्यादिप्रमाणं किमिति चेद् । उच्यते । 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादि'ति जैमिनिसूत्रम् । श्रुतिर्नाम पदान्तरनिरपेक्षशब्दः । इयं सर्वप्रमाणापेक्षया बलवती । तस्योदाहरणमुखेन प्रकृते तदभावं दर्शयति — व्रीहिभिरिति । श्रुतसामर्थ्यप्राप्तमर्थान्तरेणाविनाभावलक्षणं लिङ्गं 'बर्हिर्देवसदनमि'त्यादाव(सति ? स्ति), प्रकृ(तो ? ते)नास्तीत्याह — नापीति । अन्यतराकाङ्क्षया इतरेतराकाङ्क्षया वा वाक्यद्वयसामर्थ्यमारभ्याधीतविषयं प्रकरणम् । तच्च श्रुत्यादित्रयमपेक्ष्य महावाक्यार्थं बोधयति । तच्च प्रयाजादिवदत्र नास्तीत्याह — नापीति । अङ्गतापत्तेरिति । तथाच विनिगमनाभावान्न तेषां परस्पराङ्गाङ्गिभाव इति भावः । क्रमसन्निविष्टानां क्रमसन्निविष्टैर्यथाक्रमं सम्बन्धः क्रमः । स च पूर्वचतुष्टयमपेक्ष्य वाक्यार्थं जनयति । यथा 'दब्धिरसी'त्यादियाजमानमन्त्राणां क्रमादुपांशुया(जा ? गा)दौ विनियोगः, (न) तथा श्रवणादौ क्रमो वर्तते । वाक्यान्तरप्रतिपन्नस्य वाक्यान्तरप्रतिपन्नेन सम्बन्धनिमित्तं संज्ञासामर्थ्यं समाख्या । यथा 'शुन्धध्वं दैव्याय कर्मणे देवयज्यायै' इति मन्त्रस्य पौरोडाशीनकाण्डे समाम्नातस्य पुरोडाशपात्रशुन्धने विनियोगः । नचेह तथास्तीत्याह — क्रमसमाख्ये चेति । एवं

जादावङ्गत्वविचारः सप्रयोजनः । पूर्वपक्षे विकृतेषु प्रयाजाननुष्ठानं, सिद्धान्ते तु तत्रापि तदनुष्ठानमिति । प्रकृते तु श्रवणं न कस्यचित् प्रकृतिः, येन मनननिदिध्यासनयोः तत्राप्यनुष्ठानमङ्गत्वविचारफलं भवेत् । तस्मान्न तार्तीयशेषत्वं मनननिदिध्यासनयोः, किन्तु यथा घटादिकार्ये मृत्पिण्डादीनां प्रधानकारणता चक्रादीनां सहकारिकारणतेति प्राधान्याप्राधान्यव्यपदेशः, तथा श्रवणमनननिदिध्यासनानामपीति मन्तव्यम् । सूचितं चैतद् विवरणाचार्यैः— 'शक्तितात्पर्यविशिष्टशब्दावधारणं प्रमेयावगमं प्रत्यव्यवधानेन कारणं भवति, प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात् । मनननिदिध्यासने तु चित्तस्य प्रत्यगात्मप्रवणतासंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्यद्वारेण ब्रह्मानुभवहेतुतां प्रतिपद्येते इति फलं प्रत्यव्यवहितकारणस्य विशिष्टशब्दावधारणस्य व्यवहितमनननिदिध्यासने तदङ्गे अङ्गीक्रियेते' इति ।

श्रवणादिषु च मुमुक्षूणामधिकारः । काम्ये कर्मणि फलकामस्या-

---

मनननिदिध्यासनयोः प्रमाणाभावान्न तार्ती(येन तात्मिय ? य)मङ्गत्वमिति । प्रसाध्यप्रयोजनाभावादपि न तार्तीयमङ्गत्वमित्याह — किञ्चेति । तदनुष्ठानं प्रयाजाद्यनुष्ठानम् । तार्तीयाङ्गत्वनिराकरणमुपसंहरति— तस्मादिति । कीदृशं तर्हि अङ्गत्वमाचार्यचरणैरभिहितमिति शङ्कते — किन्त्विति । परिहरति — यथेति । उक्तार्थे शाब्दापरोक्षस्थलीयविवरणाचार्यसम्मतिमाह — सूचितं चैतदिति । शक्तितात्पर्यविशिष्टं विशिष्टशब्दार्थः । कारणत्वे हेतुमाह — अव्यवधानेनेति । तदुपपादयति — प्रमाणस्येति । मननादेस्तद्वैपरीत्यमाह — मननेति । प्रत्यगात्मप्रवणतालक्षणो यः संस्कारस्तेन परिनिष्पन्नब्रह्मैकाग्र्यलक्षणा या वृत्तिः सैव का(र्यता ? र्यं) तद्द्वारेणेत्यर्थः । अव्यवधानेन प्रतिपादनफलमाह —इति फलमिति ।

ननु अधिकार्यभावात् श्रोतव्य इति न विधिः । तथाहि — न तावत् स्वर्गकामो यजेतेतिवद् ब्रह्मज्ञानकामो मोक्षकामो वा श्रोतव्य इति वाक्यमस्ति । नवा श्रोतव्य इत्यादौ फलसमर्थकमर्थवादं पश्यामः, येन रात्रिसत्रन्यायेनार्थवादिकमोक्षफलकामोऽधिकारी स्यात् । विश्वजिन्न्यायेन तत्कल्पने च श्रवणादौ स्वर्गकाम एवा(वि ? धि)कारी स्यादित्याशङ्क्याह — श्रवणादिषु चेति । तथाच 'एतावदरे खल्वमृतत्वमि'त्यार्थवादिकमोक्षफलकामोऽधिकारी ।

**धिकारित्वात् । मुमुक्षायां च नित्यानित्यविवेकस्य इहामुत्रार्थफलभोगविरागस्य शमदमोपरतितितिक्षासमाधानश्रद्धानां च विनियोगः । अन्तरिन्द्रियनिग्रहः शमः । बहिरिन्द्रियनिग्रहो दमः । विक्षेपाभाव उपरतिः । शीतोष्णादिद्वन्द्वसहनं तितिक्षा । चित्तैकाग्र्यं समाधानम् । गुरुवेदान्तवाक्येषु (विश्वासः) श्रद्धा । अत्र उपरमशब्देन संन्यासो-**

---

नचैतावच्छब्देनात्मदर्शनस्यापि ग्रहणाविशेषाद् द्रष्टव्य इत्यादेरपि मोक्षकामोऽधिकारित्वेन दर्शनस्य प्रमाणमस्तु(?), परतन्त्रत्वेन विधानायोगेन एतावच्छब्देनात्मदर्शनस्याग्रहणात् । किन्तु श्रवणादेरेव ग्रहणम् । यद्यपि ब्रह्मज्ञानस्यैव विचारफलत्वेन तत्कामो विचारेऽधिकारी स्यात्, तथापि तस्य स्वतोऽपुरुषार्थतया ग्रामपश्वादिवत् पुमर्थसाधनतया गौणप्रयोजनत्वसूचनाय मुमुक्षोरधिकारित्वप्रवादः । नहि मोक्षं कामयमानस्तत्साधनं ज्ञानं (न) कामयते इति सम्भवति । तथाच मोक्षसाधनब्रह्मज्ञानकामोऽधिकारीति तत्त्वम् । ननु 'शान्त' इत्यादिश्रुत्या शमादीनामप्यधिकारि(विशेषण)त्वप्रतिपादने कथं मुमुक्षूणामेवाधिकार इत्यत आह — **काम्य इति** । ज्योतिष्टोमादौ स्वर्गकामादेरेवाधिकारित्वदर्शनादिति भावः । तर्हि समाधिविधानमनर्थकमित्यत आह — **मुमुक्षायामिति** । मोक्षेच्छायां विनियोग इति सम्बन्धः । **नित्येति** । शुद्धबुद्धमुक्तस्वभावं ब्रह्मैव नित्यं वस्तु, तस्मादन्यत् प्रपञ्चजातमनित्यमिति विवेचनस्येत्यर्थः । 'सोऽन्वेष्टव्य' इति विधिप्रकरणे 'तद्यथे'त्यादिश्रुत्या नित्यानित्यवस्तुविवेकस्याधिकारिविशेषणत्वेन बोधनादिति भावः । **इहेति** । ऐहिकानां स्रक्चन्दनविषयादिभोगानां कर्मोत्पन्नतयानित्यत्ववद् आमुष्मिकाणामप्युर्वश्यादिविषयभोगानामनित्यतया तेभ्यो नितरां विरक्तस्येत्यर्थः । 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायादि'ति 'आत्मनस्तु कामाय सर्वं प्रियं भवती'ति श्रुत्या इहामुत्रार्थभोगविरागोऽङ्गत्वेन दर्शित इति भावः । शमादीनां स्वरूपमाह — **अन्तरिन्द्रियेत्यादिना** । ननु 'सन्न्यस्य श्रवणं कुर्यादि'त्यादिना सन्न्यासस्यापि श्रवणाङ्गत्वावगमात् कथं नोक्तमित्यत आह — **अत्रेति** । यद्वा, ननु मुमुक्षूणामेव श्रवणाद्यधिकारित्वे मुमुक्षुत्वस्य सर्ववर्णसाधारणत्वेन तत्र सर्वेषामधिकारः स्यादित्याशङ्क्याह — **अत्रेति** । उपरमशब्दस्य विहितकर्मानुष्ठानाभावरूपसन्न्यासवाचकतया तस्य सर्ववर्णसाधारणत्वाभावादिति भावः । किमत्रोपरमशब्देन विक्षेपाभावविशिष्टसन्न्यासोऽभिधीयते,

ऽभिधीयते । तथाच सन्न्यासिनामेवश्रवणादावधिकार इति (चेत् ? के-चित्) । अपरे तूपरमशब्दस्य सन्न्यासवाचकत्वाभावाद् विक्षेपाभाव-मात्रस्य ग्रहस्थेष्वपि सम्भवाद्, जनकादेरपि ब्रह्मविचारस्यापि श्रू-यमाणत्वात् सर्वाश्रमसाधारणं श्रवणादिविधानमित्याहुः । सगुणो-

---

उत विक्षेपाभावमात्रं, सन्न्यासमात्रं वा । आद्यं दूषयति — उपरमशब्दस्येति ।
तथाच गौरवान्मानाभावाच्चेति भावः । द्वितीय आह — विक्षेपेति । विपरीत-प्रतिभासमात्रस्येत्यर्थः । तृतीये त्वाह — जनकादेरिति । 'अभयं वै जनक! प्राप्तोऽसी'ति श्रुतेरिति भावः । कस्य तर्हि श्रवणादिविधानमत आह — सर्वेति । ननु 'ब्रह्मसंस्थोऽमृतत्वमेती'ति श्रुतिगतसंस्थापदेनानन्यव्यापारतारूपं ब्रह्मनिष्ठत्वं प्रतिपाद्यते । तादितराश्रमाणां न सङ्गच्छते ।

"अकुर्वन् विहितं कर्म निन्दितं च समाचरन् ।

प्रत्यवायी भवेद् विप्रः"

इत्यादिशास्त्रात् स्वाश्रमविहितकर्माननुष्ठाने प्रत्यवायश्रवणात् परित्यक्तसर्व-कर्मणः परिव्राजकस्य प्रत्यवायाभावात् । नच स्वाश्रमविहितकर्मानुष्ठानाविरोधेन यथावसरं ब्रह्मविचारोऽस्तु । तावतापि ब्रह्मसंस्थत्वसिद्धेरिति वाच्यम् ।

"वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद् यतयः शुद्धसत्त्वाः ।"

इत्यादिश्रुत्या

"तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।"

इत्यादिस्मृत्या च ब्रह्मसंस्थस्येतरकर्माभावप्रतिपादनात्, 'इमं च लोकममुं च परित्यज्यात्मानमन्विच्छेत्' 'सन्न्यस्य श्रवणं कुर्यादि'ति श्रुत्या परिव्राजकस्यैव श्रवणाधिकार इति चेत् । न ।

"ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा ।"

इत्युपक्रम्य 'ब्रह्मसंस्थोऽमृतत्वमेती'ति श्रुत्या सर्वाश्रमसाधारणतया मोक्षप्रतिपाद-नेन तद्धेतुविचारेऽपि तथात्वावगमात् । 'सन्न्यासयोगात्' 'सन्न्यस्ये'त्यादेश्च क-ल्मषनिवृत्तिद्वारेण इह जन्मनि जन्मान्तरे वा कृतसन्न्यासयोगप्रतिपादनपरत्वात् । अन्यथा 'यद्यातुरः स्यान्मनसा वाचा वा सन्न्यसेदि'ति विहितसन्न्यासवैयर्थ्या-पत्तेः । सन्न्यासविशेषस्यैव श्रवणाङ्गत्वे मानाभावाच्च । किञ्च 'समित्पाणिः श्रोत्रियं

पासनमपि चित्तैकाग्र्यद्वारा निर्विशेषब्रह्मसाक्षात्कारे हेतुः । तदुक्तं—

"निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥

---

ब्रह्मनिष्ठम्' 'आचार्यमभिगच्छेदि'ति श्रुत्या इन्धनापरपर्यायसमिधो गुरूपायनत्वावगमेन समिद्रूपोपायनं तु गृहस्थानामेव सम्भवतीत्यस्ति तेषामपि श्रवणादावधिकारः । अपिच 'स्थाणुरयं भार(का नरकेवलोऽभिविधिरूपेत ? हारः किलाभूदधीत्य वेदं) न विजानाति योऽर्थम्' इति श्रुत्या

"यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥"

इत्यादिस्मृत्या चाध्ययनविधिसामर्थ्याच्च सर्ववेदाध्ययन(सामर्थ्यांव ? स्वार्थांव)-बोधफलकत्वावगमेनोपनिषदर्थविचारस्याप्यावश्यकतया अध्ययनविधिबलादेव वेदाधिकारिमात्रस्य श्रवणादावधिकारनिश्चयः ।

"अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ।
आचार्येणाप्यनुज्ञातश्चतुर्णामेव आश्रमः (?) ॥"

इति । अतएव भगवता भाष्यकारेण 'विद्या प्रतिषेधाभावमात्रेणाप्यर्थिनमधिकरोति श्रवणादिष्वि'ति वदता सर्वाश्रमसाधारणं श्रवणादिविधानं सूचितम् । नन्वेवं सति स्त्रीशूद्रसहिताः सर्वेऽपि श्रवणाधिकारिणः स्युः, मुमुक्षुत्वस्य सर्वसाधारणत्वादिति चेत् । न ।

"उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।"

इत्यादिना उपनीतस्याध्ययनविधानादुपनयनस्य च 'वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमि'ति श्रुत्या वर्णत्रयमात्रसाधारणतया स्त्रीशूद्रयोरध्ययनाभावात् श्रवणादावधिकारानवकाश इति संक्षेपः । श्रुतिस्मृतीतिहासपुराणेषु सगुणब्रह्मोपासनोपवर्णनस्य प्रयोजनमाह — सगुणोपासनमपीति । उक्तार्थे आगमं प्रमाणयति — तदुक्तमिति । ननु सगुणोपासनस्यार्चिरादिमार्गेण

वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम् ॥"

इति । सगुणोपासकानां चार्चिरादिमार्गेण ब्रह्मलोकं गतानां तत्रैव श्रवणाद्युत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणा सह मोक्षः । कर्मठानां तु धूमादिमार्गेण पितृलोकं गतानामुपभोगेन कर्मक्षये सति पूर्वकृतसुकृतदुष्कृतानुसारेण ब्रह्मादिस्थावरान्तेषु पुनरुत्पत्तिः । तथाच श्रुतिः— 'रमणीयचरणा रमणीयां योनिमापद्यन्ते', 'कपूयचरणाः कपूयां योनिमापद्यन्ते' इति । प्रतिषिद्धानुष्ठायिनां तु रौरवादिनरकविशेषेषु तत्तत्पापोचिततीव्रदुःखमनुभूय च सूकरादितिर्यग्योनिषु स्थावरादिषु

---

ब्रह्मलोकावा(प्ति ? प्ते)रेव फलत्वेन श्रवणान्न मोक्षफलत्वमित्यत आह—सगुणोपासकानां चेति । (श्रुत्या च श्र मोक्षादिति स्य श्रवणादिति भावः । अत्रोपासना द्विविधा । अङ्गाव ?) 'एतेन प्रतिपद्यमाना इ(मं) मानवमा(वर्तं ना)वर्तन्ते' इति श्रुत्या

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥"

इति (श्रु ? स्मृ)त्या च मोक्षस्य श्रवणादिति भावः । अत्रोपासना द्विविधा । अङ्गावबद्धोपासना प्रतीकोपासना चेति । तत्राद्या उद्गीथाद्युपासना । तस्याः कर्मफलेऽतिशयसम्पादकत्वेनोपयोगः । प्रतीकोपासनापि द्विविधा ब्रह्मोपासना अब्रह्मोपासना चेति । यथा 'मनो ब्रह्मेत्युपासीते'त्यादि । तथा 'वाचं धेनुमुपासीते'त्यादि । तत्र ब्रह्मोपासकानामर्चिरादिमार्गेण ग(मनाद् ? तानाम्) अन्येषां वचनवलादब्रह्मविदामपि पञ्चाग्निविद्योपासकानामर्चिरादिना गतानाम् 'अश्व इव रोमाणि विधूय पापमि'त्यादिश्रुत्या च निरस्तसमस्तदोषाणां ब्रह्मलोक एव सम्पादितश्रवणादिसाधनानां तत्रैव ब्रह्मसाक्षात्कारसम्पादनेन ब्रह्मणा सह परममुक्तिः । अन्येषां धूमादिमार्गेण गमनं पुनरावृत्तिश्चेति । ननु कर्मठानां कर्मफलभोगानन्तरं तत्र श्रवणादिसम्पादनेन मुक्तिरस्ति । नेत्याह — कर्मठानां त्विति । पाप-

**चोत्पत्तिरित्यलं प्रसङ्गागतप्रपञ्चेन । निर्गुणब्रह्मसाक्षात्कारवतस्तु न लोकान्तरगमनं, 'न तस्य प्राणा उत्क्रामन्ती'ति श्रुतेः । किन्तु यावत्प्रारब्धकर्मक्षयं सुखदुःखे अनुभूय पश्चादपवृज्यते । ननु**

**"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।"**

**इत्यादिश्रुत्या**

**"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ।"**

**इत्यादिस्मृत्या च ज्ञानस्य सकलकर्मक्षयहेतुत्वनिश्चये सति प्रारब्धकर्मावस्थानमनुपपन्नमिति चेत् । न । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' (कैवल्येन ?) इत्यादिश्रुत्या च "नाभुक्तं क्षीयते कर्म" इत्यादिस्मृत्या चोत्पादितकार्यकर्मव्यतिरिक्तानां सञ्चितकर्मणामेव ज्ञानविनाश्यत्वावगमात् । सञ्चितं द्विविधं सुकृतं दुष्कृतं च । तथाच श्रुतिः— 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामि'ति ।**

**ननु ब्रह्मज्ञानान्मूलाज्ञाननिवृत्तौ तत्कार्यप्रारब्धकर्मणोऽपि निवृत्तेः**

---

तारतम्यकृतैव श्वसूकरादिभूत्पत्तिरित्येतत् पुराणादिषु द्रष्टव्यमिति सूचयति— अलमिति । ब्रह्मोपास(ना ? का)पेक्षया ब्रह्मज्ञानिनो वैषम्यमाह—**निर्गुणेति** । ननु ब्रह्मज्ञाने सति सद्य एव कुतो न मुक्तिरिति शङ्कते— **किन्त्विति** । ननु ज्ञानात् पूर्वकालीनसुकृतदुष्कृते प्रियाप्रियौ गृह्णीतः, उत पराचीने । नाद्यः । तयोस्तत्त्वज्ञानेन विनाशात् । न द्वितीयः ।

"ज्ञानामृतेन(तृप्ता ? तृ)प्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किञ्चित् कर्तव्यमस्ति चेन्न स तत्त्ववित् ॥"

इत्यादिना ज्ञानिनः कर्मनिषेधात् । तदुक्तं भाष्यकारेण— 'नच निर्विचिकित्सं तत्त्वमसीत्यादिवाक्यार्थमवधारयतः कर्मण्यधिकारोऽस्ती'ति चेत् । न । तत्त्वज्ञानोक्तितः सञ्चितकर्मणां तत्त्वज्ञाननाश्यत्वेऽपि रामाद्यवतारकृतपुण्यवदेव लोकसङ्ग्रहार्थं ज्ञानिकृतसुकृतदुष्कृतसम्भवेन तदादाय 'तस्य पुत्रा दायमुपयन्ती'त्यादिश्रुत्यर्थोपपत्तेः ।

ननु ज्ञानादज्ञाननिवृत्तौ न जानामीति व्यवहारापत्तिः । तन्निवृत्तौ देहधारणाद्यनुपपत्तिरिति चोदयति— **नन्विति** । किमप्रतिबद्धदशायामनुपप-

**कथं ज्ञानिनो देहधारणमुपपद्यत इति चेत् । न । *अप्रतिबद्धज्ञानस्यैवाज्ञाननिवर्तकतया प्रारब्धकर्मरूपप्रतिबन्धकदशायामज्ञाननिवृत्तेरन-**

त्तिरुत प्रतिबद्धदशायाम् । आद्य इष्टापत्तिरित्याह — **अप्रतिबद्धेति** । द्वितीयं दूषयति — **प्रारब्धेति** । ऊर्ध्वाग्रत्वज्ञानेऽप्यधोग्रत्वाद्यारोपदर्शनेन (प्रति)बद्धज्ञानस्याज्ञानानिवर्तकत्वाद् देहधारणमुपपद्यत इति भावः । ननु प्रारब्धकर्मणामविद्यानिवृत्तिप्रतिबन्धकत्वे तत्त्वज्ञानिनः पूर्ववदविद्यासत्त्वेन ब्रह्मस्वरूपावरणे पूर्वावस्थातो विशेषो न स्यात् । नचावरणविशिष्टाज्ञानविनाशमात्रेण पूर्वावस्थातो वैषम्यमिति वाच्यम् । सति प्रतिबन्धके तन्नाशस्याप्ययोगात् । नच विक्षेपविशिष्टाज्ञानविनाशरूपकार्य एव प्रारब्धकर्म प्रतिबन्धकं, न त्वावरणविशिष्टतन्निवृत्तावपीति वाच्यम् । तथासति प्रपञ्चविषयकपारमार्थिकभ्रमादेरनिवृत्त्यापत्तेः । विपरीतप्रतिभासजननशक्तेरेव विक्षेपशक्तितया तत्सत्त्वे भ्रमस्यावर्जनीयत्वादिति चेत् । उच्यते । 'तरति शोकमात्मविद्'

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥"

'ब्रह्म वेद ब्रह्मैव भवती'त्यादिवाक्यं ज्ञानात् संसारनिवृत्तिं श्रावयति । 'तस्य तावदेव चिरं' 'स्थितप्रज्ञस्य का भाषा' 'दैवादुपेतमि'त्यादिवाक्यं देहधारणं प्रारब्धकर्मप्रतिष्ठां च दर्शयति । नह्यनयोः प्रमाणयोः कस्यचिद् बाध्यत्वं युज्यते । अतो व्यवस्था एवमाश्रयणीया । तथाहि — यथा विक्षेपावरणात्मककार्यद्वयबलेन विक्षेपावरणानुकूलं शक्तिद्वयमविद्यायाः कल्प्यते, तथा विक्षेपवैजात्याद् विजातीयानेकशक्तिरपि कल्प्यते, कार्यगम्यत्वाच्छक्तीनाम् । तथाचाश्रुतवेदान्तानां प्रपञ्चे पारमार्थिकत्वभ्रमः । श्रुतवेदान्तानामनुत्पन्नब्रह्मज्ञानानां व्यावहारिकत्वभ्रमः । उत्पन्नब्रह्मसाक्षात्काराणां पुरुषधौरेयाणां शुकवामदेववसिष्ठप्रभृतीनां यावद्देहपातं प्रातिभासिकत्वभ्रम इत्यविद्यायां तिस्रः शक्तय इष्यन्ते । तथाच प्रपञ्चे पारमार्थिकत्वभ्रमे मिथ्यात्वग्राहकानुमानादिजन्यपरोक्षज्ञानेन तस्मिन् बाध्यमाने विरोधित्वाविशेषणाविद्यानिष्ठा पारमार्थिकत्वभ्रमजनिका शक्तिरपि निवर्तते । ब्रह्मसाक्षात्कारदशायां प्रपञ्चे व्यावहारिकत्वभ्रमस्यापि बाधे तदनुकूलाविद्याशक्तिरपि बाध्यते । तस्यां दशायां प्रातिभासिकत्वभ्रमस्य तदनुकूलशक्तिविशिष्टाविद्यायाश्च न निवृत्तिः । उदाहृतशास्त्रबलेन प्रारब्धकर्मणा-

* 'अप्रतिबन्धकज्ञाने'ति तु मूलकोशपाठः ।

ङ्गीकारात्। नन्वेवमपि तत्त्वज्ञानादेकस्य मुक्तौ सर्वस्य मुक्तिः स्यात्। अविद्याया एकत्वेन तन्निवृत्तौ क्वचिदपि संसारायोगादिति चेत्। न। इष्टापत्तेरित्येके। अपरे त्वेतद्दोषपरिहारायैव 'इन्द्रो मायाभिरि'ति बहुवचनश्रुत्यनुगृहीतमविद्यानानात्वमङ्गीकर्तव्यमित्याहुः। अन्ये त्वेकैवाविद्या।

---

स्तत्र तत्र प्रतिबन्धकत्वकल्पनात्। भोगेन प्रारब्धकर्मसु क्षीयमाणेषु निष्परिपन्थिब्रह्मानन्दसाक्षात्कारात् प्रातिभासिकत्वभ्रमस्य तज्जननशक्तिविशिष्टाविद्यायाश्च निवृत्तिः। अतएव

"शास्त्रेण नश्येत् परमार्थरूपं कार्यक्षमं नश्यति वा परोक्षात्।
प्रारब्धनाशात् प्रतिभासनाश एवं त्रिधा नश्यति चात्ममाया॥"

इत्युक्तम्। अतएव चैतदभिप्रेत्य

"तुच्छानिर्वचनीया च तात्त्विकी च त्रिधा मता।
माया ज्ञेया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः॥"

इति प्राचीनैरुक्तम्। तथाच ज्ञानिनां पूर्वावस्थातो (न) किञ्चिदनुपपन्नमिति भावः। नन्वेवमपीति। अप्रतिबद्धापरोक्षज्ञाननिवर्तकत्व इत्यर्थः। सर्वमुक्तौ संसारानुपलम्भ इष्ट एवेत्याह — नेति। इदानीं वामदेवादेर्मुक्तत्वेन सर्वमुक्तावन्येषां संसारोपलम्भो न स्यात्। नचेतः पूर्वं न कस्यापि मुक्तिरिति वाच्यम्। वामदेवशास्त्रविरोधात्। वामदेवादीनामुत्पन्नज्ञानानामपि मुक्त्यनङ्गीकारे

"आषाढवाते चलति द्विपेन्द्रे चक्रीवतो वारिधिरेव काष्ठा।"

इति न्यायेनार्वाचीनानां मुक्तिर्दूरोत्सादिता स्यादित्यस्वरसादाह — अपरे त्विति। अन्येषां संसारोपलम्भदोषपरिहारायेत्यर्थः। नचाविद्यानानात्वे प्रपञ्चनानात्वापत्तिः। इष्टत्वात्। प्रत्यभिज्ञायाश्च सादृश्योपाधिकत्वात्। एकाविद्यामतेऽपि नित्यसौषुप्तिकप्रलयाद्युपगमेन प्रत्यभिज्ञायास्तथैवोपपाद्यत्वात्। परिमाणभेदभिन्नत्वेऽप्यभेदमते कुब्जादिप्रत्यभिज्ञायास्तथैव वाच्यत्वाच्च। ननु मायाभिरिति बहुवचनस्य 'मायां तु प्रकृतिं विद्याद्' 'अजामेकामि'त्यादिषु एकवचनबलेन लाघवानुगृहीतेनाविद्याया एकत्वनिश्चयेन मायागतशक्त्यभिप्रायत्वान्नाविद्यानानात्वासिद्धिरित्यस्वरसादाह — अन्ये त्विति। ननु शक्तिभेदेऽप्यज्ञानस्यैकत्वेन

तस्या एवाविद्याया जीवभेदेन ब्रह्मस्वरूपावरणशक्तयो नाना । तथाच यस्य ब्रह्मज्ञानं तस्य ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाशः । न त्वन्यं प्रति ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाश इत्युपगमान्नैकमुक्तौ सर्वमुक्तिः । अतएव 'यावदधिकारमवस्थितिराधिकारिकाणाम्' इत्यस्मिन्नधिकरणेऽधिकारिपुरुषाणामुत्पन्नतत्त्वज्ञानानामिन्द्रादीनां देहधारणानुपपत्तिमाशङ्क्याधिकारापादकप्रारब्धकर्मसमाप्त्यनन्तरं विदेहकैवल्यमिति सिद्धान्तितम् । तदुक्तमाचार्यवाचस्पतिमिश्रैः —

> "उपासनादिसंसिद्धं तोषितेश्वरचोदितम् ।
> अधिकारं समाप्यैते प्रविशन्ति परं पदम् ॥"

---

तदवच्छिन्नजीवस्यापि तथात्वात् कथमेकमुक्तौ सर्वमुक्त्यभावः, अतएव विवरणाचार्यैस्तत्र तत्र जीवैक्यमुक्तमित्याशङ्क्याह — अत एवेति । एकमुक्त्या सर्वमुक्तावधिकारिणामेव मुक्तिरिति प्रतिपादनात् । तथाच 'विभेदजनकेऽज्ञाने' इति स्मृत्या अविद्याया जीवोपाधिकत्वेऽपि तत्तदावरणविशिष्टाविद्यायामारोपोपाधिभेदाज्जीवस्य भेद उपपद्यते । 'कार्योपाधिरि'ति वाक्यस्य कार्योपाधिरपीत्यर्थः । ईश्वरस्य कारणाविद्यामात्रोपाधित्वेन ततो भेदोपपत्तेः । विवरणाचार्याणां क्वाचित्कजीवैक्योक्तिस्तु ब्रह्मण एकत्वाज्जीवस्य नानात्वान्न जीवब्रह्मैक्यम् एकत्वानेकत्वविरुद्धधर्माधिकरणत्वादिति शङ्कानिरासाय । तथाच जीवभेद आरोपितः । वस्तुतस्तु जीवपदप्रतिपाद्य एक एवेति शास्त्रदृष्टिर्जीवैक्यपरा नतु लोकसिद्धजीवभेदनिषेधपरा । व्यावहारिकस्तु भेदो जीवानां जीवब्रह्मभेद(वद्) इष्यत एव । अत एवानन्तजीवास्पदमेकरसं ब्रह्मेत्यहङ्कारटीकायां पद्मपादाचार्यैरुक्तम् । विवरणाचार्यैरपि शारीरकभाष्यन्यायसङ्ग्रहे ग्रन्थान्तरे देवताधिकरणे 'यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणां तथा मनुष्याणामि'ति वाक्योदाहरणेन यस्य ज्ञानं तस्यैव मुक्तिरित्युक्तम् । नन्वविद्याया एकत्वेन

इति । एतच्चैकमुक्तौ सर्वमुक्तिरिति पक्षे नोपपद्यते । तस्मादेकाविद्यापक्षेऽपि प्रतिजीवमावरणभेदोपगमेन व्यवस्थोपपादनीया । तदेवं ब्रह्मज्ञानान्मोक्षः, मोक्षश्चानर्थनिवृत्तिः, निरतिशयब्रह्मानन्दावाप्तिश्चेति सिद्धं प्रयोजनम् ॥

इति श्रीधर्मराजाध्वरीन्द्रविरचितायां वेदान्तपरिभाषायां
प्रयोजनपरिच्छेदः ॥

---

जीवस्यापि तथा(त्वात्) चैत्रावगते मैत्रस्याप्यनुसन्धानप्रसङ्ग इत्यादिदूषणं स्यादित्यत आह — तस्मादिति ॥

इति श्रीपेद्दादीक्षितविरचितायां वेदान्तपरिभाषाप्रकाशिकायां
प्रयोजनपरिच्छेदः ॥

---

शुभं भूयात् ।

# स्मृतग्रन्थाद्यनुक्रमणी ।

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| २ | 'अनेन जीवेनात्मना —' | श्रुतिः | ... |
| ,, | 'सत्यं ज्ञानमनन्तं ब्रह्म' | ,, | ... |
| ,, | 'आनन्दो ब्रह्म' | ,, | ... |
| ,, | 'यस्य देवे परा भक्तिः —' | ,, | ... |
| ,, | 'आचार्यप्राचार्यसन्निपाते —' | ... | आपस्तम्बः |
| ३ | 'प्रसिद्धं हि मङ्गलाचरणस्य —' | ... | टीकाकृत् |
| ४ | 'नच पुनरावर्तते' | श्रुतिः | ... |
| ,, | 'तद्यथेह कर्मचितो —' | ,, | ... |
| ,, | 'धर्मार्थकाममोक्षाख्य —' | विष्णुपुराणम् | ... |
| ,, | 'धर्मे चार्थे च कामे च —' | महाभारतम् | ... |
| ,, | 'अपाम सोमममृता अभूम' | श्रुतिः | ... |
| ,, | 'अक्षय्यं ह वै —' | ,, | ... |
| ५ | 'आभूतसंप्लवं —' | विष्णुपुराणम् | ... |
| ,, | 'ब्रह्म वेद ब्रह्मैव भवति' | श्रुतिः | ... |
| ८ | 'यत्र त्वस्य सर्वमात्मैवाभूत्' | ,, | ... |
| ,, | 'यत्र हि द्वैतमिव —' | ,, | ... |
| ९ | 'देहात्मप्रत्ययो यद्वत् —' | ... | ... |
| १० | 'यत् साक्षादपरोक्षात् —' | श्रुतिः | ... |
| ,, | 'अन्तःकरणवृत्तौ —' | विवरणम् | ... |
| ,, | 'नित्यं विज्ञानम्' | श्रुतिः | .... |
| ११ | 'तन्मनोऽसृजत' | ,, | ... |
| ,, | 'कामः सङ्कल्पो विचिकित्सा —' | ,, | ... |
| ,, | 'एतस्माज्जायते —' | ,, | ... |
| ,, | 'अस्ति ह्यालोचनं ज्ञानं —' | ... | ... |
| १२ | 'मनःषष्ठानीन्द्रियाणि' | भगवद्गीता | ... |
| ,, | 'यजमानपञ्चमाः —' | ... | ... |
| १३ | 'वेदानध्यापयामास —' | ... | ... |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १३ | 'इन्द्रियेभ्यः परा —' | श्रुतिः | |
| ,, | 'प्रमाणसहकारित्वात्—' | ... | आश्रमचरणाः |
| १४ | 'एकमेवाद्वितीयम्' | श्रुतिः | ... |
| १९ | 'यतो वा इमानि भूतानि' | ,, | ... |
| २२ | 'आत्मचैतन्येनाव्यवधानात् —' | विवरणम् | ... |
| ,, | 'सुखाद्याकारान्तःकरण —' | विवरणव्याख्या | ... |
| ,, | ... | ... | विवरणाचार्यः |
| ,, | ... | अहङ्कारटीका | ... |
| २३ | 'मनो बुद्धिरहङ्कारः—' | ... | ... |
| २४ | 'सदेव सोम्येदमग्र आसीत्' | श्रुतिः | ... |
| ,, | 'तत् सत्यं स आत्मा' | ,, | ... |
| २५ | 'संसर्गासङ्गिसम्यग्धी —' | ... | चित्सुखाचार्यः |
| २६ | 'कार्योपाधिरयं जीवः —' | श्रुतिः | ... |
| २७ | 'मायिनं तु महेश्वरम्' | ,, | ... |
| ,, | 'भावान्तरमभावोऽन्यः —' | ... | ... |
| २८ | 'देवात्मशक्तिं स्वगुणैर्निगूढां' | श्रुतिः | ... |
| ,, | 'अनृतेन हि प्रत्यूढाः —' | ,, | ... |
| ,, | 'अनीशया शोचति' | ,, | .... |
| ,, | 'त इमे सत्याः कामाः —' | ,, | .... |
| ,, | 'अविद्यायामन्तरे —' | ,, | ... |
| ,, | 'नान्यच्छ्रेयो वेदयन्ते' | ,, | ... |
| ,, | 'अज्ञानेनावृतं ज्ञानं —' | ,, | ... |
| ,, | 'नीहारेण प्रावृताः' | ,, | ... |
| ,, | 'मायां तु प्रकृतिं विद्यात्' | ,, | ... |
| २९ | 'इन्द्रो मायाभिः' | ,, | ... |
| ,, | 'अनादिमायया —' | ,, | ... |
| ,, | 'तरत्यविद्यां विततां' | ,, | ... |
| ,, | 'मायामेतां तरन्ति ते' | भगवद्गीता | ... |
| ,, | 'मायामात्रमिदं द्वैतम् —' | श्रुतिः | ... |
| ,, | 'ब्रह्मैव सन् ब्रह्माप्येति' | ,, | ... |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ३० | 'अजामेकां —' | श्रुतिः | ... |
| ३१ | 'जीव ईशो विशुद्धा चित् —' | .... | ... |
| ,, | 'सत्त्वं रजस्तम इति —' | भागवतम् | ... |
| ,, | 'जुषन् रजोगुणं तत्र —' | विष्णुपुराणम् | ... |
| ,, | 'सृष्टिस्थित्यन्तकरणीं —' | ,, | ... |
| ,, | 'गुणभेदं समास्थाय —' | बृहन्नारदीयम् | ... |
| ,, | 'स एव सर्गः स च —' | विष्णुपुराणम् | ... |
| ३२ | 'शक्तयो यस्य चैकस्य —' | मार्कण्डेयपुराणम् | ... |
| ,, | 'नित्यः सर्वगतो ह्यात्मा —' | कूर्मपुराणम् | ... |
| ,, | 'सहस्रशीर्षं देवं —' | श्रुतिः | ... |
| ,, | 'एको ह वै नारायणः —' | ,, | ... |
| ,, | 'नारायणं महाज्ञेयं —' | ,, | ... |
| ,, | 'एको रुद्रो न —' | ,, | ... |
| ,, | 'यो देवानां प्रथमं —' | ,, | ... |
| ,, | 'तस्य प्रकृतिलीनस्य —' | ,, | ... |
| ,, | 'यदा चर्मवदाकाशं —' | ,, | ... |
| ,, | 'ईशानः सर्वविद्यानां —' | ,, | ... |
| ३३ | 'शिवो ध्येयः शिवङ्करः —' | ,, | ... |
| ,, | 'ऋतं सत्यं परं ब्रह्म—' | ,, | ... |
| ,, | 'अहं सर्वस्य प्रभवः —' | भगवद्गीता | ... |
| ,, | 'मामेव ये प्रपद्यन्ते —' | ,, | ... |
| ,, | 'उत्तमः पुरुषस्त्वन्यः —' | ,, | ... |
| ,, | 'यस्मात् क्षरमतीतोऽहं —' | ,, | ... |
| ३४ | 'तदैक्षत बहु स्यां —' | श्रुतिः | ... |
| ४३ | 'अथ रथान् रथयोगान् —' | ,, | ... |
| ५३ | 'त्रीनुदाहरणान्तान् वा | ... | भट्टपादाः |
| ५४ | ... | तत्त्वदीपनम् | ... |
| ५५ | 'सर्वेषामपि भावानां —' | ... | चित्सुखाचार्यः |
| ,, | 'अंशिनः स्वांशगात्यन्ताभावस्य —' | ... | ,, |
| ५६ | 'तदनन्यत्वमारम्भण —' | ... | ... |
| ,, | 'नखल्वनन्यत्वम् —' | ... | आचार्यवाचस्पतिः |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ५७ | 'अग्नीषोमीयं पशुमालभेत' | श्रुतिः | ... |
| ,, | 'न हिंस्यात्' | ,, | ... |
| ,, | 'समस्तहेयरहितं —' | ... | ... |
| ५८ | 'तस्मादद्वैतमेवास्ति —' | श्रुतिः | ... |
| ,, | 'न कलञ्जं भक्षयेत्' | ,, | ... |
| ,, | 'अनाहुतिर्वै —' | ,, | ... |
| ,, | 'जर्तिलयवाग्वा' | ,, | ... |
| ,, | 'न तत्र रथा न —' | ,, | ... |
| ,, | 'तद् विजिज्ञासस्व' | ,, | ... |
| ५९ | 'तमेवैकं जानथ —' | मुण्डकश्रुतिः | ... |
| ,, | 'तत्सामान्यादितरेषु —' | ... | ... |
| ,, | 'प्रत्यक्षादिप्रमाणानां —' | ... | ... |
| ,, | 'नेह नानास्ति किञ्चन' | श्रुतिः | ... |
| ६० | 'मृत्तिकेत्येव सत्यम्' | ,, | .. |
| ,, | 'न तत्समो नाप्यधिकश्च दृश्यते' | ,, | ... |
| ,, | 'ब्राह्मणो न हन्तव्यः' | ,, | .... |
| ६१ | 'आकाश आनन्दो न स्यात्' | ,, | ... |
| ,, | 'असद् ब्रह्मेति वेद चेत्' | ,, | ... |
| ,, | 'यस्मात् परं नापरमस्ति —' | ,, | ... |
| ,, | 'यदिदं दृश्यते मूर्तं —' | विष्णुपुराणम् | ... |
| ,, | 'प्रत्यक्षेणानुमानेन —' | भागवतम् | ... |
| ,, | 'यथा स्वप्ने मुहूर्तः —' | वासिष्ठम् | ... |
| ,, | 'प्रपञ्चमेव दुर्बोधं —' | कूर्मपुराणम् | ... |
| ,, | 'ब्रह्मैव विद्यते साक्षात् —' | स्कान्दपुराणम् | .... |
| ,, | 'शिवरूपातिरेकेण —' | ,, | ... |
| ६४ | 'स प्रजापतिरात्मनो —' | श्रुतिः | ... |
| ,, | 'एतद्वै पशूनां रूपम्' | ,, | ... |
| ६५ | 'तप्ते पयसि दध्यानयति' | ,, | ... |
| ,, | 'श्रुतिलिङ्गवाक्यप्रकरण —' | जैमिनिसूत्रम् | ... |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ६६ | 'मासमग्निहोत्रं जुहोति' | श्रुतिः | ... |
| ,, | 'ऐन्द्या गार्हपत्यमुपतिष्ठते' | ,, | ... |
| ,, | 'कदाचनस्तरीरसि' | ,, | ... |
| ६७ | 'अग्नये जुष्टं निर्वपामि' | ,, | ... |
| ६८ | 'विशेष्यं नाभिधा —' | .... | भट्टपादाः |
| ६९ | 'स्वार्थादन्येन रूपेण—' | ... | ... |
| ७० | 'अनन्यलभ्यः शब्दार्थः' | ... | ... |
| ७१ | 'तत्त्वमसि' | श्रुतिः | ... |
| ७२ | 'तत्त्वमस्यादिवाक्येषु —' | ... | ... |
| ,, | 'यतो वाचो निवर्तन्ते' | श्रुतिः | ... |
| ,, | 'ब्रह्मैकविषयां वाचं —' | ... | ... |
| ,, | 'अन्या वाचो विमुञ्चथ' | श्रुतिः | ... |
| ७४ | 'सोऽरोदीत्' | ,, | ... |
| ,, | 'दर्शपूर्णमासाभ्यां —' | ,, | ... |
| ,, | 'समिधो यजति' | ,, | ... |
| ,, | 'स्वार्थबोधे समर्थानां —' | ... | भट्टपादाः |
| ७७ | 'कपिञ्जलानालभेत' | ,, | ... |
| ७८ | 'अस्य महेता भूतस्य —' | श्रुतिः | ... |
| ७९ | 'वाचा विरूपनित्यया' | ,, | ... |
| ,, | 'अनादिनिधना —' | स्मृतिः | ... |
| ,, | 'वृष्णे चोदस्व सुष्टुतिम्' | श्रुतिः | ... |
| ८० | 'तस्माद् यज्ञात् —' | ,, | ... |
| ,, | 'प्रतिमन्वन्तरं चैषा —' | स्मृतिः | ... |
| ,, | 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' | श्रुतिः | ... |
| ,, | 'स्वयम्भूरेष भगवान्' | भागवतम् | ... |
| ८२ | 'तरति शोकमात्मवित्' | श्रुतिः | ... |
| ८३ | 'विश्वजिता यजेत' | ,, | ... |
| ,, | 'सेतुं दृष्ट्वा समुद्रस्य —' | .... | ... |
| ,, | 'स स्वर्गः सर्वान् —' | जैमिनिसूत्रम् | ... |
| ८४ | 'फलमत उपपत्तेः' | ... | ... |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ८४ | 'तस्माद् दृढानुरोधेन —' | ... | आचार्यवाचस्पतिः |
| ९१ | 'अधिष्ठानावशेषो हि —' | ... | ... |
| ९२ | 'अक्षमा भवतः केयं —' | ... | सुरेश्वराचार्याः |
| ,, | ... | विवरणम् | ... |
| ,, | ... | तत्त्वप्रदीपिका | ... |
| ,, | 'प्राहुः प्रामाण्यं —' | ... | ... |
| ९६ | 'आनन्दो विषयानुभवः —' | पञ्चपादिका | ... |
| ,, | 'अन्तरङ्गबहिरङ्गयोः —' | ... | ... |
| ,, | 'साक्षी चेता —' | श्रुतिः | ... |
| ,, | 'उत्पन्नं द्रव्यं —' | ... | ... |
| ९७ | 'यः सर्वज्ञः सर्ववित् —' | श्रुतिः | ... |
| ,, | 'सोऽकामयत बहु —' | ,, | ... |
| ,, | 'तन्मनोऽकुरुत' | ,, | ... |
| ९८ | 'निर्गुणस्याप्रमेयस्य —' | विष्णुपुराणम् | ... |
| ,, | 'शक्तयः सर्वभावानां —' | ,, | ... |
| ९९ | 'अजो ह्येको —' | श्रुतिः | ... |
| १०० | 'यथा सोम्यैकेन —' | ,, | ... |
| ,, | 'कथमसतः सज्जायेत' | ,, | ... |
| १०१ | 'इदं सर्वं यदयमात्मा' | ,, | ... |
| ,, | 'सच्च त्यच्चाभवत्' | ,, | ... |
| ,, | 'बहु स्यां प्रजायेयेति' | ,, | ... |
| ,, | 'अस्ति भाति प्रियं —' | ... | ... |
| १०२ | 'रमणीयचरणा रमणीयां —' | श्रुतिः | ... |
| ,, | 'तिर्यङ्नृपितृदेवानां —' | ... | ... |
| ,, | 'अथ पुरुषो ह वै —' | श्रुतिः | ... |
| ,, | 'प्रथमो महतः सर्गः —' | पुराणम् | ... |
| १०३ | 'अत्र चत्वारि भूतानि —' | ... | ... |
| ,, | 'महाभूतानि पञ्चैव —' | भागवतम् | ... |
| ,, | 'भूतादिस्तु विकुर्वाणः —' | ... | ... |
| ,, | 'आद्याद्यस्य गुणानेतान् —' | ... | मनुः |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ११४ | 'रूपंरूपं प्रतिरूपो बभूव' | श्रुतिः | ... |
| ११६ | 'असङ्गो ह्ययं पुरुषः' | ... | ... |
| ११७ | 'अन्तःकरणं हि स्वस्मिन्निव —' | विवरणम् | ... |
| ११९ | 'बुद्धेर्गुणेनात्मगुणेन —' | श्रुतिः | ... |
| ,, | 'वालाग्रशतभागस्य —' | ,, | ... |
| ,, | 'अणुमात्रोऽप्ययं जीवः —' | स्मृतिः | ... |
| ,, | 'अजो महानयमात्मा' | आगमः | ... |
| १२० | 'अत्रायं पुरुषः स्वयञ्ज्योतिः' | श्रुतिः | ... |
| १२१ | 'प्रज्ञान एव' | ,, | ... |
| ,, | 'चिद्रूपत्वादकर्मत्वाद्' | ... | आचार्यचरणाः |
| १२२ | 'यत्र त्वस्य सर्वमात्मैवाभूत् —' | श्रुतिः | ... |
| १२३ | 'द्वासुपर्णा —' | ,, | ... |
| ,, | 'द्वाविमौ पुरुषौ —' | स्मृतिः | ... |
| ,, | 'आदित्यो यूपः—' | श्रुतिः | ... |
| ,, | 'यन्मनसा न मनुते' | ,, | ... |
| ,, | 'तं त्वौपनिषदं पुरुषं' | ,, | ... |
| ,, | 'नान्योऽतोऽस्ति द्रष्टा' | ,, | ... |
| १२४ | 'सविशेषणे हि —' | ... | ... |
| ,, | 'अष्टाशीतिसहस्राणि —' | ... | ... |
| ,, | 'तस्यापि मेरुमैत्रेय —' | ... | ... |
| ,, | 'ब्रह्मैवेदममृतम्' | श्रुतिः | ... |
| १२५ | 'ऐतदात्म्यमिदं सर्वं —' | ,, | ... |
| ,, | 'अथ येऽन्यथातो विदुः' | ,, | ... |
| ,, | 'अथ सम्पत्स्यते' | ,, | ... |
| ,, | 'उपक्रमोपसंहारौ —' | ... | आचार्यचरणाः |
| ,, | 'अहं ब्रह्मास्मि' | श्रुतिः | ... |
| १२६ | 'ममैवांशो जीवलोकः' | स्मृतिः | ... |
| ,, | 'क्षेत्रज्ञं चापि मां —' | भगवद्गीता | ... |
| ,, | 'मह्यं तुभ्यमनन्ताय —' | पुराणम् | ... |
| ,, | 'मृत्योः स मृत्युमाप्नोति —' | श्रुतिः | ... |
| ,, | 'विभेदजनकेऽज्ञाने —' | ... | ... |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १२७ | 'एतस्यैवानन्दस्य —' | श्रुतिः | ... |
| ,, | 'आनन्दो ब्रह्मेति व्यजानात्' | ,, | ... |
| ,, | 'त्याज्यं सुखं विषयसङ्गमजन्म —' | ... | ... |
| ,, | 'आनन्दं ब्रह्मणो विद्वान्' | श्रुतिः | ... |
| १२८ | 'आत्माराम आत्मकामः' | ,, | ... |
| ,, | 'आनन्दाद्ध्येव खल्विमानि —' | ,, | .... |
| ,, | 'यो वै भूमा तत् सुखं' | ,, | ... |
| ,, | 'भूमा सम्प्रसादाद् —' | ... | ... |
| ,, | 'गोतमाभिमतां मुक्तिं —' | ... | ... |
| ,, | 'सम्पूज्य ब्राह्मणं —' | ... | ... |
| ,, | 'ब्रह्मणः सायुज्यं —' | श्रुतिः | ... |
| १२९ | 'हरौ नियतचित्तत्वात् —' | ... | ... |
| ,, | 'यदा पश्यः पश्यते —' | मुण्डकश्रुतिः | .... |
| ,, | 'यथा नदीनदा लोके —' | कूर्मपुराणम् | ... |
| ,, | 'असौ सायुज्यरूपोक्ता —' | स्कान्दपुराणम् | ... |
| १३० | 'एषा वै परमा मुक्तिः —' | ,, | ... |
| ,, | 'बद्धो मुक्त इति व्याख्या —' | भागवतम् | ... |
| १३१ | 'प्रसरं न लभन्ते हि —' | ... | ... |
| ,, | 'विमुक्तश्च विमुच्यते' | श्रुतिः | ... |
| ,, | 'न बन्धोऽस्ति न मोक्षोऽस्ति —' | ... | .... |
| ,, | 'आचार्यवान् पुरुषो वेद' | श्रुतिः | ... |
| १३२ | 'तमेव विदित्वा —' | ,, | ... |
| ,, | 'आत्मा तु सततं प्राप्तो —' | ... | ... |
| ,, | 'कर्मणैव हि संसिद्धिम् —' | आगमः | ... |
| ,, | 'न कर्मणा न प्रजया —' | श्रुतिः | ... |
| ,, | 'यदेव विद्यया करोति —' | ,, | ... |
| ,, | 'तमेवं विद्वानमृत इह भवति' | ,, | ... |
| ,, | 'ज्ञानादेव तु कैवल्यं —' | स्मृतिः | ... |
| १३३ | 'अभयं वै जनक प्राप्तोऽसि' | श्रुतिः | ... |
| ,, | 'तदात्मानमेवावेदहं —' | ,, | ... |
| ,, | 'तत्त्वमस्यादिवाक्यार्थं —' | नारदीयम् | .... |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १३३ | 'जुष्टं यदा पश्यत्यन्यमीशं —' | श्रुतिः | ... |
| ,, | 'उदरमन्तरं कुरुते' | ,, | ... |
| ,, | 'संसारवर्जितः साक्षात् —' | भविष्यत्पुराणम् | ... |
| ,, | 'अजमनिद्रमस्वप्नं —' | माण्डूक्योपनिषत् | ... |
| ,, | 'यः सर्वप्राणिचित्तज्ञः —' | ... | हारीतः |
| ,, | 'जाग्रत्स्वप्नसुषुप्त्यादि —' | कैवल्योपनिषत् | ... |
| १३४ | 'अहमेव परं ब्रह्म —' | ब्रह्मोपनिषत् | ... |
| ,, | 'संविन्मात्रः स्थितश्चाहं —' | स्कान्दपुराणम् | ... |
| ,, | 'यदस्थूलमनण्वाख्यं —' | विश्वामित्रस्मृतिः | ... |
| ,, | 'अहमेव परं ब्रह्म —' | ... | वररुचः |
| ,, | 'अत्रात्मव्यतिरेकेण —' | दक्षस्मृतिः | ... |
| ,, | 'एकेन हेमेन विभूषणानि —' | नारदार्यम् | ... |
| ,, | 'छिद्रभेदैर्यथा —' | मोक्षधर्मः | ... |
| १३५ | 'प्राणोऽस्मि प्रज्ञात्मा —' | श्रुतिः | ... |
| ,, | 'आत्मनश्च परस्यापि —' | भागवतम् | ... |
| ,, | 'भेददर्शनमास्थाय —' | स्कान्दपुराणम् | ... |
| १३६ | 'मामुपास्स्व' | श्रुतिः | ... |
| ,, | 'शास्त्रदृष्ट्या तूपदेशो —' | ... | ... |
| ,, | 'मनसैवानुद्रष्टव्यम्' | श्रुतिः | ... |
| ,, | 'अप्राप्य मनसा सह' | ,, | ... |
| ,, | विमूढा नानुपश्यन्ति —' | स्मृतिः | ... |
| ,, | 'नावेदविन्मनुते —' | श्रुतिः | ... |
| ,, | 'औपनिषदः पुरुषः' | ,, | ... |
| १३७ | 'अपिसंराधनेसूत्रात् —' | कल्पतरुः | ... |
| ,, | 'सर्वत्र शक्यते कर्तुं —' | स्मृतिः | ... |
| ,, | 'अपि संराधने प्रत्यक्षा —' | ब्रह्मसूत्रम् | ... |
| ,, | 'ज्ञानप्रसादेन विशुद्ध —' | श्रुतिः | ... |
| ,, | 'योगिनस्तं प्रपश्यन्ति —' | स्मृतिः | ... |
| ,, | ... | ... | वाचस्पतिः |
| १३८ | 'तमेतं वेदानुवचनेन—' | श्रुतिः | ... |
| ,, | 'ज्ञानमुत्पद्यते पुंसां— | ... | ... |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १३८ | 'धर्मेण पापमपनुदति—' | श्रुतिः | ... |
| ,, | 'तत्प्राप्तिहेतुर्ज्ञानं च—' | आगमः | ... |
| ,, | 'धर्मात् सुखं च ज्ञानं च —' | ... | ... |
| ,, | 'नित्यनैमित्तिकैरेव --' | ... | ... |
| ,, | 'नित्यकर्मणि मलापकर्षेण—' | ... | विवरणाचार्यः |
| ,, | 'वाजपेयेनेष्ट्वा—' | श्रुतिः | ... |
| १३९ | 'कषाये कर्मभिः—' | स्मृतिः | ... |
| ,, | 'आत्मा वा अरे द्रष्टव्यः—' | श्रुतिः | ... |
| ,, | 'तपसा कल्मषं हन्ति' | स्मृतिः | ... |
| १४० | 'ते ध्यानयोगानुगताः—' | श्रुतिः | ... |
| १४१ | 'श्रोतव्यः श्रुति—' | ,, | ... |
| १४२ | 'व्रीहिभिर्यजेत' | ,, | ... |
| ,, | 'दध्ना जुहोति' | ,, | ... |
| ,, | 'बर्हिर्देवसदनं दामि' | ,, | ... |
| ,, | 'दर्शपूर्णमासाभ्यां—' | ,, | ... |
| ,, | 'दब्धिरसि' | ,, | ... |
| ,, | 'शुन्धध्वं दैव्याय—' | ,, | ... |
| १४३ | 'शक्तितात्पर्यविशिष्ट—' | ... | विवरणाचार्यः |
| १४४ | 'परीक्ष्य लोकान्—' | श्रुतिः | ... |
| ,, | 'आत्मनस्तु कामाय—' | ,, | ... |
| ,, | 'सन्न्यस्य श्रवणं कुर्यात्' | ,, | ... |
| १४५ | 'ब्रह्मसंस्थोऽमृतत्वमेति' | ,, | ... |
| ,, | 'अकुर्वन् विहितं कर्म—' | ... | ... |
| ,, | 'वेदान्तविज्ञानसुनिश्चितार्थाः—' | श्रुतिः | ... |
| ,, | 'तद्बुद्धयस्तदात्मानः—' | स्मृतिः | ... |
| ,, | 'ब्रह्मचारी गृहस्थो वा' | .... | ... |
| ,, | 'यद्यातुरः स्यान्मनसा वाचा वा' | ... | ... |
| ,, | 'समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' | श्रुतिः | .... |
| १४६ | 'आचार्यमभिगच्छेत्' | ,, | ... |
| ,, | 'निर्विशेषं परं ब्रह्म—' | ... | ... |
| ,, | 'स्थाणुरयं भारहारः—' | श्रुतिः | ... |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १४६ | 'यदधीतमविज्ञातं—' | स्मृतिः | ... |
| ,, | 'अनेकजन्मसंसिद्धः—' | ... | ... |
| ,, | 'उपनीय तु यः शिष्यं—' | ... | ... |
| ,, | 'वसन्ते ब्राह्मणमुपनयीत —' | ... | ... |
| १४७ | 'वशीकृते मनस्येषां —' | ... | ... |
| ,, | 'एतेन प्रतिपद्यमाना —' | श्रुति | ... |
| ,, | 'ब्रह्मणा सह ते —' | स्मृतिः | ... |
| ,, | 'मनो ब्रह्मेत्युपासीत' | श्रुतिः | .... |
| ,, | 'वाचं धेनुमुपासीत' | ,, | ... |
| ,, | 'अश्व इव रोमाणि —' | ,, | ... |
| १४८ | 'न तस्य प्राणा उत्क्रामन्ति' | ,, | ... |
| ,, | 'क्षीयन्ते चास्य कर्माणि —' | ,, | ... |
| ,, | 'ज्ञानाग्निः सर्वकर्माणि —' | स्मृतिः | ... |
| ,, | 'तस्य तावदेव चिरं —' | श्रुतिः | ... |
| ,, | 'नाभुक्तं क्षीयते कर्म' | स्मृतिः | ... |
| ,, | 'तस्य पुत्रा दायमुपयन्ति —' | श्रुतिः | ... |
| ,, | 'ज्ञानामृतेन तृप्तस्य —' | ... | ... |
| १४९ | 'भिद्यते हृदयग्रन्थिः —' | श्रुतिः | ... |
| ,, | 'स्थितप्रज्ञस्य का भाषा' | ... | ... |
| ,, | 'दैवादुपेतं' | ... | ... |
| १५० | 'इन्द्रो मायाभिः' | श्रुतिः | ... |
| ,, | 'शास्त्रेण नश्येत् —' | ... | ... |
| ,, | 'तुच्छानिर्वचनीया च —' | ... | ... |
| ,, | 'आषाढवाते चलति —' | ... | ... |
| १५१ | 'यावदधिकारमवस्थितिः —' | ... | ... |
| ,, | 'उपासनादिसंसिद्धं' | ... | आचार्यवाचस्पतिमिश्रः |
| | ... | ... | विवरणाचार्यः |
| ,, | 'अनन्तजीवास्पदमेकरसं ब्रह्म' | अहङ्कारटीका | पद्मपादाचार्यः |
| ,, | .... | शारीरकभाष्यन्यायसङ्ग्रहः | ... |
| ,, | 'यो यो देवानां —' | श्रुतिः | |

# LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syanandurapuravarnanaprabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

---

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ **Abhinavakaustubhamala and Dakshinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alankāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः **Durghatavrtti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*). | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—विरूपाक्षपञ्चाशिका **Virupakshapanchasika** (Vedanta) by Virūpākṣanātha with the commentary of Vidyāçakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—मातङ्गलीला **Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् **Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—परमार्थसारम् **Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् **Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—नीतिसारः **Nitisara** (Nīti) by Kāmandaka, with the commentary of Śaṅkarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् **Svapnavasavadatta** (Nātaka) by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् **Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् **Pancharatra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—नारायणीयम् **Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Deśamangalavārya (*out of stock*). | 4 | 0 | 0 |
| No. 19—मानमेयोदयः **Manameyodaya** (Mīmāmsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—अविमारकम् **Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 21—बालचरितम् **Balacharita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

| | Rs. | As. | P. |
|---|---|---|---|
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि **Madhyamavyayoga-Dutavakya-Dutaghatotkacha-Karnabhara and Urubhanga** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः **Nanartharnavasamkshepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः **Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका **Kanadasiddhantachandrika** (Nyāya) by Gangādharasūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् **Abhishekanataka** by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः **Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः **Nanartharnavasamkshepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या **Vastuvidya** (Śilpa) (*out of stock*). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः **Nanartharnavasamkshepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part II, 3rd, 4th and 5th Sargas). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—वाररुचसंग्रहः **Vararuchasamgraha** (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—मणिदर्पणः **Manidarpana** (Nyāya) by Rājaçūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः **Manisara** (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāsikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् **Asauchashtaka** (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् **Charudatta** (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् **Alankarasutra** by Rājānaka Ruyyaka with the Alankārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् **Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Sankara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् **Pratimanataka** by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghaṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रशुद्धम् **Tantrasuddha** by Bhaṭṭāraka Vedottama | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् **Prapanchahridaya.** | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः **Paribhashavritti** (Vyākaraṇa) by Nīlakaṇṭha Dīkṣita). | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् **Sidhantasiddhanjana** (Vedānta) by Kriṣṇānanda Sarasvatī (Part I.) | 1 | 12 | 0 |
| No. 48—सिद्धान्तसिद्धाञ्जनम् **Do.** Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका **Goladipika** (Jyotiṣa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः **Rasarnavasudhakara** (Alankâra) by Singa Bhūpāla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghatīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghatîya Sarvânanda (Part IV, 3rd Kâṇḍa). | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः **Sabdanirnaya** (Vedânta) by Prakâśâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः **Sphotasiddhi-nyayavichara** (Vyâkaraṇa). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् **Mattavilasaprahasana** (Nâtaka) by Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका **Manushyalayachandrika** *(out of stock)* (Śilpa). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् **Raghuviracharita** (Kâvya). | 1 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 58—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛsnânanda Sarasvatî (Part III). | 2 | 0 | 0 |
| No. 59—नागानन्दम् **Nagananda** (Nâṭaka) by Harṣadeva with the commentary Vimarśinî of Sivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः **Laghustuti** by Laghubhattâraka with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 61—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣnânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62—सर्वमतसंग्रहः **Sarvamatasamgraha.** | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् **Kiratarjuniya** (Kâvya) by Bhāravi with the commentary Sabdârthadîpikā of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः **Meghasandesa** by Kâlidāsa with the commentary Pradīpa of Dakṣinâvartanātha. | 0 | 12 | 0 |
| No. 65—मयमतम् **Mayamata** (Śilpa) by Mayamuni. | 3 | 4 | 0 |
| No. 66—महार्थमञ्जरी **Maharthamanjari** (Darśana) with the commentary Parimala of Mahesvarânanda. | 2 | 4 | 0 |
| No. 67—तन्त्रसमुच्चयः **Tantrasamuchchaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śankara (Part I, 1–6 Patalas) (*out of stock*). | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः **Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyadîpikâ of Śrī Kumāra | 1 | 12 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः **Isanasivaguru-devapaddhati** (Tantra) by Isânaśivagurudevamiśra (Part I, Sâmānyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimula-kalpa** (Part I). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 71—तन्त्रसमुच्चयः **Tantrasamuchchaya**(Tantra) by Nârâyaṇa with the commentary Vimarśinī of Sankara(Part II, 7—12 Patalas) (*out of stock*). | 3 | 8 | 0 |
| No. 72—ईशानशिवगुरुदेवपद्धतिः **Isanasivaguru-devapaddhati** (Tantra) by Iśānaśiva-gurudevamiśra (Part II. Mantrapāda). | 4 | 0 | 0 |
| No. 73—ईश्वरप्रतिपत्तिप्रकाशः **Isvarapratipatti-prakasa** (Vedānta) by Madhusūdana-sarasvatī. | 0 | 4 | 0 |
| No. 74—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya. (Part I — Âcâra and Vyavahâra Adhyâyas). | 3 | 4 | 0 |
| No. 75—शिल्परत्नम् **Silparatna** (Śilpa) by Śrī-kumâra (Part I). | 2 | 12 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimula-kalpa** (Part II). | 3 | 0 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः **Isanasivaguru-devapaddhati** (Tantra) by Iśānasiva-gurudevamiśra (Part III, Kriyāpāda 1—30 Patalas). | 3 | 0 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् **Asvalayanagrhya-sutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Ganapati Sāstri (Part I—1 & 2 Adhikaraṇas). | 3 | 12 | 0 |
| No. 80—अर्थशास्त्रम् **Do.** Do. (Part II—3—7 Adhikaranas). | 4 | 0 | 0 |
| No. 81—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrīḍa of Viśva-rūpācārya (Part II. Prâyascit-tâdhyâya). | 2 | 0 | 0 |
| No. 82—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopā-dhyāya T. Ganapati Sastri (Part III, 8—15 Adhikaraṇas). | 3 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 83—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part IV, Kriyāpāda 31–64 Patalas and Yogapāda). | 3 | 8 | 0 |
| No. 84—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part III). | 2 | 0 | 0 |
| No. 85—विष्णुसंहिता **Visnusamhita** (Tantra). | 2 | 8 | 0 |
| No. 86—भरतचरितम् **Bharatacarita** (Kâvya). by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—सङ्गीतसमयसारः **Sangitasamayasara** (Sangīta) of Sangîtâkara Pârśvadeva. | 1 | 2 | 0 |
| No. 88—काव्यप्रकाशः **Kavyaprakasa** (Alankâra) of Mammaṭabhaṭṭa with two commentaries the Sampradāyaprakaśinī of Śrī Vidyācakravartin and the Sâhityacûdâmaṇi of Bhaṭṭagopâla (Part I, 1-5 [illegible]). | 3 | 0 | 0 |
| No. 89—स्फोटसिद्धिः **Sphotasiddhi** (Vyāka[illegible]) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—मीमांसाश्लोकवार्त्तिकम् **Mimamsaslokavartika** with the commentary Kāśikā of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—होराशास्त्रम् **Horasastra** of Varāhamihirācārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—रसोपनिषत् **Rasopanishat.** | 2 | 0 | 0 |
| No. 93—वेदान्तपरिभाषा **Vedantaparibhasha** (Vedanta) of Dharmarajadhvarindra with the commentary Prakaśika of Peddadiksita. | 1 | 8 | 0 |

***Apply to:—***

*The Curator*

*for the publication of Sanskrit Manuscripts,*

*Trivandrum.*